ॐ

धार्मिक—सज्जनोपयोगी

पण्डितकेशवभट्टज्योतिर्विदा

संस्कृतः शोधितश्च

वैश्वदेवादिपुरश्चर्यादिसंवलितश्चापि.

अयम्

# मन्त्रात्मकर्मकाण्डस्तृतीयः

काश्मीरदेशे

यन्त्रालयेऽङ्कयित्वा

सप्तर्षिवत्सरे ५०१२ वैक्रमे १९९३ ईस्वी १९३६

परोपकाराय प्राकाश्यं नीतः

मूल्यं ३।।=)

पत्ता पं० केशवभट्टज्योतिषी पाठशालाटीचर रैणावारी-भाग

काश्मीर—श्रीनगर—

# अथ ब्रह्मकलशस्थापनम्

(ॐ कलश को अर्घ व पुष्प फीमन्त्र से फेंकना) "ॐ भद्रं पश्येम प्रचरेम भद्रं, भद्रं वदेम शृणुयाम भद्रम्। तन्नो मित्रो वरुणो मामऽहन्तामऽदितिः सिन्धुः पृथिवी उत द्यौः ॥ १ ॥ अभि नो देवीर-वसा महः शर्मणानृपत्नी। अच्छिन्नपत्राः सचन्ताम् १ ॥ इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये। आग्नायीं सोमपीत-ये २ ॥ मही द्यौः पृथिवी चन इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः ३ ॥ तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः। गन्धर्वस्य ध्रुवे पदे ४ ॥ स्योना पृथिवि भवाऽनृक्षरा निवेशनी। यच्छा नः शर्म सप्रथः ५ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्त धामभिः ६ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे

पदम् । समूढमऽस्य पांसुरे ७ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ८ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य-युज्यः सखा ९ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् १० ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ११ ॥ ॐ गायत्र्यैनमः । ॐ भूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियोयोनः प्रचोदयात् ३ ॥

(क्षेत्रपालों को अर्घ) ॐ अश्वमेधे घोराणामार्षम् ॥

द्रष्ट्रेनम उपद्रष्ट्रेनमोऽनुद्रष्ट्रेनमः ख्यात्रेनम उपख्यात्रे-नमोऽनुकशास्त्रेनमः शृण्वतेनम उपशृण्वतेनमः सतेन-मोऽसतेनमो जातायनमो जनिष्यमाणायनमो भूताय-नमो भविष्यतेनमश्चक्षुषेनमः श्रोत्रायनमो मनसेनमो वाचेनमो ब्रह्मणेनमः शान्तायनमस्तपसेनमः ॥ भूतं



भव्यं भविष्यद्वषट् स्वाहानम, ऋक्सामयजुर्वषट्स्वाहा नमोगायत्रीत्रिष्टुब्जगती वषट्स्वाहानमः पृथिव्यन्त-रिक्षंद्यौर्वषट्स्वाहा नमोऽन्नंकृषिर्वृष्टिर्वषट्स्वाहानमः पिता-पुत्रः पौत्रो वषट्स्वाहानमः प्राणो व्यानोऽपानोवषट्स्वा-हानमोभूर्भुवःस्वर्वषट्स्वाहानमः ॥ (कलश को पुष्पऽर्घ)

यो विश्वचक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्व-तस्पात् । सम्बाहुभ्यां नमते सम्पतत्रैर्द्यावापृथिवी ज-नयन्देव एकः ॥ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वीजायता-मऽस्मिन्राष्ट्रे राजन्य एषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनुड्वानाऽशुःसप्तिर्जिष्णूरथेष्ठाः पुरन्धि-र्योषा सभेयोयुवाऽस्य यजमानस्य वीरोजायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्य-न्तां योगक्षेमो न कल्पताम् ॥ (इषेत्वोर्जे त्वेति ब्रह्मणाः सर्ववेदो ब्रह्मणः) इषे त्वोर्जे त्वा वायवः स्थोपायवः

स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा-मावःस्तेन ईशत माघशंसः, परिवो रुद्रस्य हेतिर्वृणक्तु ध्रुवाअस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि ॥ देवस्यत्वा सवितुः प्रसवेऽ-श्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामाऽददे, गोपदऽसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रेयमऽगाद्धिषणा, बर्हिरच्छ मनुना कृता स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य, परिषूतमसि माऽधो मोपरि परुस्त ऋध्यासमाच्छेत्ता तेमारिषत्, देवबर्हिः शतवल्शं विरोह सहस्रवल्शा विवयं रुहेम, आदित्या रास्नासीन्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु, सतेमास्थादिन्द्रस्यत्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि, देवङ्गममऽसि तदाहरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे ॥ वसोः



पवित्रमासि शत धारं वसूनां पवित्रमासि सहस्रधारमऽयक्ष्माव: प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः ॥ मधुमद्घृतवत्पिन्वमाना जीवाजीवन्तीरुप वः सदेम, मातरिश्वानो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्ना हुतासि माह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधायाः, हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकायस्वाहा, द्यावापृथिवीभ्यां सम्पृच्यध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्रा धानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यऽदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत ॥ माहित्रीणामवोऽस्तु द्युम्नं मित्रस्याऽर्यम्णः, दुराधर्षं वरुणस्य नहि तेषामऽमाचन नाध्वसु वारणेषु, ईशेरिपुरघशंसः यस्मै पुत्रासो अदितेः प्रजीवसे मर्त्याय, ज्योतिर्यच्छन्त्यऽजस्रं सोमानं स्वरणं कृणुहि ब्रह्मणस्पतिः, कक्षीवन्तं य औशिजः यो रेवान्यो

अमीवहा वसुवित्पुष्टिवर्धनः, स नः सिषक्तु यस्तरः, मानः शंसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाऽणो ब्रह्मणस्पते ॥ ( विष्टर व पानीयुत पात्र में तीनफूल पाना ) संव्वः सृजामि हृदयं संसृष्टं मनो अस्तुवः १ । संसृष्टा- स्तन्वः सन्तु वः संसृष्टः प्राणो अस्तुवः २ ॥ संय्या- वः प्रियास्तन्वः संप्रिया हृदयानिवः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ३ ॥ (उस के विष्टर से जीवाधान, करना) अग्नेरायुरसि तस्य ते मनुष्या आ- युष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि १ ॥ इन्द्रस्य प्राणः सते प्राणन्ददातु यस्य प्राणस्तस्मै ते स्वाहा २ ॥ पितृणां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ३ ॥ मरुतां प्राणास्ते ते प्राणन्ददातु येषां प्राणस्तेभ्यो वः स्वाहा ४ ॥ विश्वेषान्देवानां प्राणास्ते ते प्राणन्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ५ ॥ प्रजापतेः



परमेष्टिनः प्राणौ तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ६ ॥ यदऽसर्पस्तत्सर्पिरऽभवो यन्नवमस्तन्नव- नीतमऽभवो यदऽध्रियथास्तद्घृतमऽभवः ।७॥ घृत- स्य धारामऽमृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः तत्त्वा विष्णुरऽन्वपश्यत्तत्त्वेळागव्यैरयत् ॥ ८ ॥ पाव- मानेन त्वा स्तोमेन गायत्र्या वर्तन्या पांशोर्वीर्येणो द्धराम्यऽसौ ॥ ९ ॥ बृहता त्वा रथन्तरेण त्रिष्टुभा व- र्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ १० ॥ अग्नेस्त्वा- मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतुजीवा- तवे जीवनस्यायासौ ॥ देवा आयुष्मन्तस्तेऽमृतेनाऽ- युष्मन्तस्तेषामऽयमाऽयुषाऽयुष्मानस्त्वसौ ॥ ब्रह्माऽयुष्म- तद्ब्राह्मणैरायुष्मत्तस्याऽयमायुषाऽयुष्मा० अग्निरायुष्मान्स वनस्पतिभिरायुष्मांस्तस्या० ३ ॥ यज्ञ आयुष्मान्स द- क्षिणाभिरायुष्मांस्तस्यायमाऽ० ४ ॥ सोम आयुष्मान्स

ओषधीभिरायुष्मांस्तस्यायमा० ५ ॥ ओषधय आयुष्म-
तीस्ता अद्भिरायुष्मतीस्तासामऽयमऽयुषाऽयुष्मानऽस्त्व-
ऽसौ ६ ॥ इममऽग्न आयुषे वर्चसे कृधि तिग्म-
मोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म
यच्छ विश्वेदेवा जरदऽष्टिर्यथासत् ॥ ७ ॥ आश्विनोः
प्राणौतौ ते प्राणन्दत्तां तेन जीव , मित्रावरुणयोः
प्राणौतौ ते प्राणंदत्तां तेन जीव , बृहस्पतेः प्राणः
स ते प्राणं ददातु तेन जीव ॥ ( पूजामण्डप के दस
दिशायों का तिल व अर्घ फेंकना ) । ( पूर्वे ) ॥ ये देवाः-
पुरः सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु
तेभ्यः स्वाहा १ । ( दक्षिणे ) ॥ ये देवा दक्षिणात्सदो
यमनेत्रा रक्षोहणस्ते० २ ॥ ( पश्चिमे ) ये देवाः पश्चा-
त्सदो मरुन्नेत्रा रक्षोहणस्ते० ३ ॥ ( उत्तरे ) ये देवा
उत्तरात्सदो मित्रावरुणनेत्रा रक्षोहणस्ते० ४ ॥ ( ऊर्ध्वे



ये देवा उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोहणस्ते-
नः० ५ ॥ ( आग्नेये ) इदमऽहं रक्षोभिः समूहाम्यऽग्ने
सन्दह रक्षः सन्दग्धं रक्षोग्नये पुरः सदे रक्षोघ्ने स्वा-
हा ६ ॥ ( नैरृते ) यमाय दक्षिणात्सदे रक्षोघ्ने स्वा-
हा ७ ॥ ( वायव्ये ) मरुद्भ्यः पश्चात्सद्भ्यो रक्षोहभ्यः
स्वाहा ८ ॥ ( ईशाने ) मित्रावरुणाभ्यामुत्तरात्सद्भ्यां
रक्षोहभ्यां स्वाहा ९ ॥ ( अधः ) सोमायोपरिषदे वस्व-
दते रक्षोघ्ने स्वाहा १० ॥ ( प्रणीतपात्र का पानी वि-
ष्टर से आलोडना ) रथः पञ्चवाही दक्षिणा ॥ विष्टर-
से पूजाद्रव्यों में जल की शुद्धि ) आपोहिष्ठा मयोभुवस्ता न
ऊर्जे दधात न । महे रणाय चक्षसे ॥ योवः शिवतमो
रसस्तस्य भाजयते हनः । उशतीरिव मातरः ॥ तस्माअर
ङ्गमामवो यस्यक्षयायजिन्वथ । आपो जनयथा च नः ॥ ( अ
र्घ की ) आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम् । भवा

वाजस्य सङ्गथे ॥ ( फूल की ) पुष्पवतीः प्रसुमतीः फलि-
नीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः ॥
तिलक की ) गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ( दर्भ की )
कर्मणे वां वानस्पत्यमऽसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः
प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृतास्वधया वित-
ष्टा उर्वन्तरिक्षं वीहि ॥ ( धूप की ) धूरसि धूर्व धूर्व-
न्तं योऽस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व ।
देवानामऽसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देव-
हूतमम् । विष्णोः क्रमोऽसि अह्रुतमसि हविर्धानं दृं-
हस्व माह्वार्मित्रस्य त्वा चक्षुषा प्रेक्षउरु त्वा वाताय ।
वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्, रुद्रा-
स्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वत्, आदित्यास्त्वा
धूपयन्तु जागतेन छन्दसाऽङ्गिरस्वत्, विश्वेत्वा देवा



वैश्वानरा धूपयन्त्वाऽनुष्टुभेन छन्दसाऽङ्गिरस्वत् । इन्द्र-
स्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु
( सूय की ) उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवन्देवत्राः सूर्यमऽगन्मज्योतिरुत्तमम् ॥ ( दीवा की )
तेजोऽसि शुक्रमसि ज्योतिरसि धामाऽसि प्रियन्देवा-
नामऽनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि-
यज्ञेभ्यस्त्वा यज्ञेभ्यो गृह्णामि ॥ ( स्वात्मा को तिलक च
ढाना ) अध्वर्योऽयं यज्ञोऽस्तु देवा ओषधीभ्यः पशुभ्यो
मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तुदेवाः स पिन्व-
स्व घृतवद्देवयज्ञ 'अर्घ फूल' इहैवैधि माप च्योष्टा प
र्वता इवाविचाचलित् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञ-
मुदाराय ॥ ( स्वाऽसन दो दर्भ ) इममिन्द्रो अदीदरद्
ध्रुवं ध्रुवेन हविषा हविः । तस्मै सोमो अधि ब्रुवत्त-
स्मा उ ब्रह्मणस्पतिः ॥ ( धरती का आसन ) ध्रुवा

द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ (गन्धाऽर्घ फूल) मही द्यौः पृथिवी चन इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ (आकाश को) बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि 'वायवे गणेश को' निष्वसीद गणपते गणेषु त्वा-माहुर्विप्रतमं कवीनाम् । नऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवञ्चित्रमर्च ॥ 'नैर्ऋते कुमार को' कुमारं मातायुवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिमज्जनासः पुरा पश्यन्ति निहित-मरतौ 'ईशाने श्री को' अश्वपूर्वां रथमध्यां हस्तिनाद-प्रमोदिनीम् । श्रियन्देवीमुपह्वये श्रीर्मा देवी जुषताम् 'मध्ये सरस्वती को' इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तुविषेभिरूर्मिभिः । पारावतघ्नीमवसे सुवृक्ति-



भि सरस्वतीमाविवासेम धीतिभिः ॥ (मध्ये लक्ष्मीकाभी) कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मेस्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥ (आग्नेये विश्वकर्म को) विश्वकर्मा विश्वदेवो विश्वजिद्विश्व-दर्शितः । तेत्वा घृतस्य धारया श्रैष्ठ्याय समसृपत ॥ [कशल को] ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् । श्येनो गृद्ध्राणां स्वधितिर्वना-नां सोमः पवित्रमत्येति रेभन् ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्यो-रुषु त्रिषु विक्रमणेष्वऽधिक्षियन्ति भुवनानि विश्वाः ॥ यो रुद्रोअग्नौ यो अप्सु यो ओषधोषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै देवाय नमो अस्तु देवाः ॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ इषेत्वोर्जेत्वा वायवःस्थोऽपायवः-

स्थ देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ अग्न
आयाहि वीतये गृणानो हव्यधातवे । निहोता स-
त्सिबर्हिषि ॥ शन्नो देवीरभीष्टय आपो भवन्तु पी-
तये । शंय्योरभिस्त्रवन्तु नः ॥ आहन्पितॄँन् सुविदत्राँ
अवित्सि नपातं च विक्रमणं च विष्णोः । बर्हिषदो
ये स्वधया सुतस्य भाजन्त पित्वस्त इहागमिष्ठाः ॥
वषट् ते विष्ण आस आकृणोमि तन्मे जुषस्व शि-
पिविष्ट हव्यम् । वधन्तु त्वा सुष्टुतयो गिरो मे यूयं
पात स्वस्तिभिः सदानः ॥ ऋतुपतयेनारायणायनमः
दुर्गायै, त्र्यम्बकाय, वरुणाय, यज्ञपुरुषाय, अग्निष्वा-
त्तादिभ्यः पितृगणदेवताभ्योनमः ॥ [ यहां स्वेष्ट
याग के प्रधानों के पीछे विष्णुपञ्चायतन देना यहव्य-
वस्था है ॥ वैश्वदेव के प्रधानभी विष्णुपञ्चायतन ही
है, "जैसा" ] ॐतद्विष्णोः परमं पदं सदा पश्यन्ति


सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्य-
वो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥
भगवतेवासुदेवायनमः, सङ्कर्षणाय, प्रद्युम्नाय, अनि-
रुद्धाय, सत्याय, पुरुषाय, अच्युताय, माधवाय, गो-
विन्दाय, सहस्रनाम्नेविष्णवे, लक्ष्मीसहितायनारायणा-
य ॥ यो रुद्रोअग्नौ यो अप्सु य ओषधीषु यो व-
नस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय
नमो अस्तु देवानमः ॥ भवायदेवायनमः शर्वायदे-
वाय, रुद्रायदेवाय, पशुपतयेदेवाय, उग्रायदेवाय, भी-
मायदेवाय, महादेवाय, ईशानायदेवाय, उमासहिता-
यशिवाय, पार्वतीसहितायपरमेश्वरायनमः ॥ गणाना
न्त्वा गणपतिं हवामहे कविङ्कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः
सीद सादनंनमः ॥ भगवतेविनायकायनमः एकद-

न्तायनमः, कृष्णपिङ्गलाय, गजाननाय, लम्बोदराय, भालचन्द्राय, हेरम्बाय, आखुरथाय, विघ्नेशाय, विघ्नभक्ष्याय, वल्लभासहितायश्रीमहागणेशायनमः ॥ चित्रन्देवानामुदगादऽनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावा पृथिवी चान्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चनमः ॥ भगवतेह्रांह्रींसःसूर्यायनमः सप्ताश्वायनमः, अनश्वाय, एकाश्वाय, नीलाश्वाय, प्रत्यक्षदेवाय, परमार्थसाराय, तेजोरूपाय, प्रभासहितायश्रादित्यायनमः ॥ जातवेदसे सुनवाम सोममऽरातीयतो निदहाति वेदाः । स नस्पर्शदऽति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्याग्निर्नमः ॥ भगवत्यैश्रमायैनमः, कामायैनमः, चार्वङ्ग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकाभगवत्यै, श्रीशारदाभगवत्यै, श्रीमहाराज्ञीभगवत्यै, श्रीज्वालाभ० श्रीडाभ,



वैखरीभ०, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्म्यै, महालक्ष्म्यै, महात्रिपुरसुन्दर्यै, सहस्रनाम्न्यैदेव्यैभवान्यैनमः [विष्णुपञ्चायतनदेवताभ्यो नमः] ॥ यत इन्द्र भयामहे ततो नो अभयङ्कृधि । मघवञ्छग्धि तवतन्न ऊतिभिर्विद्विषो विमृधो जहिनमः ॥ अभयङ्करीदेव्यैनमः । क्षेमङ्करीभवान्यै, सर्वशत्रुघातिन्यै, इहराष्ट्राधिपतये [अमुकभैरवायनमः] ॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा सनो मृळातीदृशेनमः ॥ हेरुकादिभ्योनमः, वटुकादिभ्योनमः ॥ यौ ते श्वानौ यमरक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परिदेहि राजन्स्वस्ति चास्मा अनमीवञ्चधेहि ॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि, तत्र हव्यानि गन्तय ॥ मुञ्चामि त्वा हविषा जीवनाय कमऽज्ञातयक्ष्मादुत

राजयक्ष्मात् । ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि ते ॥ गायत्र्यैनमः ॐभूर्भुवःस्वः ३ ॥ ॐतद्विष्णोः परमं पदं० ॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः । तन्वस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः ॥ [ अथ नैवेद्यम् ] अमृतेशमुद्रयाऽमृतीकृत्य । अमृतमस्तु अमृतायतां नैवेद्यं सावित्राणि सावित्रस्य देवस्यत्वा सवितुःप्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामादधे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे "द्वादेवताभ्यः" प्रजापतये, ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः । चातुर्वेदेश्वरायसानुचराय । ऋतुपतयेनारायणाय "मार्गशीर्षे" रुक्मिणीसाहितायकृष्णाय



श्रीस–केशवाय । "पौषे" प्रियास–अनन्ताय, वागीश्वरीस–नारायणाय । "माघे" प्रीतिस–अच्युताय, कान्तास–माधवाय । "फाल्गुने" शक्तिस–चक्रिणे । क्रियास–गोविन्दाय । "चैत्रे" सिद्धिस–वैकुण्ठाय । मतिस–विष्णवे । "वैशाखे" शोभास–जनार्दनाय, विभूतिस–मधुसूदनाय । "ज्यैष्ठे" महिमास–उपेन्द्राय, इच्छास–त्रिविक्रमाय । "आषाढे" लक्ष्मीस–यज्ञपुरुषाय, धृतिस–वामनाय । "श्रावणे" कान्तिस–वासुदेवाय, रतिस–श्रीधराय । "भाद्रपदे" प्राप्तिस–हरये, मायास–हृषीकेशाय । "आश्वियुजे" प्राकाम्याम–योगीश्वराय, धीस–पद्मनाभाय । "कार्तिके" लघिमास पुण्डरीकाक्षाय, गरिमास–दामोदराय । "मालिम्लुचे" शक्तिस–योगीश्वराय, सत्यभामास–नरकारये, निष्कलास–महामार्तण्डाय । दुर्गायै, त्र्यम्बकाय, वरुणाय,

यज्ञपुरुषाय, अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः । (स्वेष्टयागप्रधानदेवताभ्यः) भगवतेवासुदेवाय, सङ्कर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, सत्याय, पुरुषाय, अच्युताय, माधवाय, गोविन्दाय, सहस्रनाम्नेविष्णवे, लक्ष्मीसहितायनारायणाय । भवायदेवाय, शर्वायदेवाय, रुद्रायदेवाय, पशुपतयेदेवाय, उग्रायदेवाय, भीमायदेवाय, महादेवाय, ईशानायदेवाय, उमासहितायशिवाय, पार्वतीसहिताय, परमेश्वराय । विनायकाय, एकदन्ताय, कृष्णपिङ्गलाय, गजाननाय, लम्बोदराय, भालचन्द्राय, हेरम्बाय, आखुरथाय, विघ्नेशाय, विघ्नभक्ष्याय, वल्लभासहितायश्रीमहागणेशाय । ह्रांह्रींसः-सूर्याय, सप्ताश्वाय, अनश्वाय, एकाश्वाय, नीलाश्वाय, प्रत्यक्षदेवाय, परमार्थसाराय, तेजोरूपाय, प्रभासहितायआदित्याय । भगवत्यैअमायै, कामायै, चार्वङ्ग्यै,



टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकाभगवत्यै, श्रीशारदाभ०, श्रीमहाराज्ञीभ०, श्रीज्वालाभ, व्रीडाभ०, वैखरीभ०, वितस्ताभ०, गङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्म्यै, महालक्ष्म्यै, महात्रिपुरसुन्दर्यै, सहस्रनाम्न्यैदेव्यैभवान्यै, (विष्णुपञ्चायतनदेवताभ्यः) । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै, सर्वशत्रुघातिन्यै, इहराष्ट्राधिपतये [अमुकभैरवाय] महागायत्र्यै, सावित्र्यै, सरस्वत्यै, "हरुकादिभ्यो वटुकादिभ्यः तिलतुण्डुलमांसं दधिमधुमिश्रं" ॐनमो नैवेद्यं निवेदयामिनमः ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवींद्यामुतेमां कस्मै देवाय हविषा विधेम ॥ अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चत उतये अर्चत प्रार्चत प्रियमेधसो अर्चत । अर्चन्तु पुत्रका उत पु-

रंन धृष्णुमऽचर्त अर्चत अर्चत ॥ इति कलश थापनम् ॥ अथ कलशपूजा ॥ [पानी छोडना] अस्य श्रीआसनशोधनमन्त्रस्य, मेरुपृष्ठऋषिः, सुतलंछन्दः, कूर्मोदेवता, आसनशोधने विनियोगः ॥ [धरती को दो दर्भकाण्ड आसन देना] ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि ॥ [धरती को तिलक अर्घ पुष्प] ह्रींपृथिव्यै आधारशक्त्यै समालभनं गन्धोनमः अर्घोनमः पुष्पंनमः [प्रार्थना] पृथ्वि त्वयाधृता लोका देवित्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ [स्वेष्टदेवों का स्मरण] शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि। सर्वविघ्नच्छिदे तस्मै गणाधिपतयेनमः ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां



पराजयः। एषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ महाबले महोत्साहे महाभयविनाशिनि। त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ॥ नमःशिवाय निःशेषक्लेशप्रशमशालिने। त्रिगुणग्रन्थिदुर्भेद्यभवबन्धविभेदिने ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवेनमः। गुरुभ्यनमः परमगुरुभ्ये, परमेष्ठिनेगुरवे, परमाचार्याय, आद्यसिद्धेभ्यांनमः ॥ अनाभौ, उहृदि, मशिरसि। ऊँभूः पादयोः, भुवःहृदि, स्वःशिरसि। ऊँभूःअङ्गुष्ठाभ्यांनमः, भुवःतर्जनीभ्यांनमः, स्वःमध्यमाभ्यांनमः, महःअनामिकाभ्यांनमः, जनःकनिष्ठिकाभ्यांनमः, तपःसत्यंकरतलकरपृष्ठाभ्यांनमः ॥ भूःपादयोः, भुवःजान्वोः, स्वः गुह्ये, महःनाभौ, जनःहृदि, तपःकण्ठे, सत्यंशिरसि ॥ ऊँभूःहृदयायनमः, ऊँभुवःशिरसेस्वाहा, स्वःशिखायै

वषट्, महःकवचायहूँ, जनःनेत्राभ्यांवौषट्, तपःसत्यमऽस्त्रायफट् ॥ तत्सवितुरऽङ्गुष्ठाभ्यांनमः वरेण्यंतर्जनीभ्यांनमः, भर्गोदेवस्यमध्यमाभ्यांनमः, धीमहिअनामिकाभ्यांनमः, धियोयोनःकनिष्ठिकाभ्यांनमः, प्रचोदयात्करतलकरपृष्ठाभ्यांनमः, तत्पादयोः, सवितुर्जान्वोः वरेण्यंकट्यां, भर्गोनाभौ, देवस्यहृदये, धीमहिकण्ठे, धियोनासिकायां, यश्चक्षुषे, नःललाटे, प्रचोदयात् शिरासि ॥ तत्सवितुर्हृदयायनमः, वरेण्यंशिरसेस्वाहा, भर्गोदेवस्यशिखायैवषट्, धीमहिकवचाकहूं, धियोयोनःनेत्राभ्यांवौषट्, प्रचोदयादऽस्त्रायफट् ॥ ॐआपःस्तनयोः, ज्योतिर्नेत्रयोः, रसोमुखे, अमृतंललाटे, ब्रह्मभूर्भुवःस्वरोंशिरसि ॥ ॐतद्विष्णोः परमंपदं हृदयायनमः सदापश्यन्तिसूरयःशिरसेस्वाहा, दिवीवचक्षुराततंशिखायैवषट्, तद्विप्रासोविपन्यवोकवचायहूं, जागृवांसःसमिन्धतेनेत्राभ्यांवौषट् विष्णोर्यत्परमंपदमऽस्त्रायफट् ॥ [तेल तर्फों को फैंकना] अपसर्पन्तु ते भूता दिवि भूम्यऽन्तरिक्षगाः । पाषाण्डकारिणो येवै दिव्यास्त्रेण प्रताडिताः ॥ [प्राणायाम कर के, पैर मुंह को छिडकना] तीर्थेस्तेयं तीर्थमेव समानानां भवति मानः शंस्योररुरुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाऽणो ब्रह्मणस्पते ॥ [पवित्र धारना]वसोः पवित्रमसि शतधारं वसूनां पवित्रमऽसि । सहस्त्रधारमऽयक्ष्मावः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः ॥ (स्वात्मा को गन्ध पुष्प अर्घ चढाना) परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मनेनारायणाय आधारशक्त्यै । समालभनं गन्धोनमः, अर्घोनमः पुष्पंनमः ॥ [दीप को] स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः । प्रसीद मम गोविन्द दीपोऽयं प्रतिगृह्यताम् ॥ [धूप को] वन-

स्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः । आधारः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ (सुर्ज को) नमो धर्मनिधानाय नमःस्वकृतसाक्षिणे । नमः प्रत्यक्षदेवाय भास्करायनमो नमः ॥ (पानी से संकल्प करना) यत्राऽस्ति माता न पिता न बन्धुर्भ्रातापि नो यत्र सुहृज्जनश्च । न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्म-दीपं शरणं प्रपद्ये ॥ आत्मनेनारायणाय आधारशक्त्यै दीपोनमो धूपोनमः ॥ ॐतत्सद्ब्रह्म अद्यतावत्तिथावद्य० महागणपतये कुमाराय श्रियै सरस्वत्यै, लक्ष्म्यै, विश्वकर्मणे द्वार्देवताभ्यः । प्रजापतये ब्रह्मणे क-लशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः । चातुर्वे-देश्वराय सानुचराय [ऋतुपतयेनारायणाय) दुर्गायै, त्र्यम्बकाय, वरुणाय, यज्ञपुरुषाय, अग्निष्वात्तादिभ्यः, पितृगणदेवताभ्यः ॥ भगवतेवासुदवाय, सङ्कर्षणाय,



प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय मा-धवाय गोविन्दाय सहस्रनाम्नेविष्णवेलक्ष्मीसहितायना-रायणाय ॥ भवायदेवाय, शर्वायदेवाय, रुद्रायदेवाय, पशुपतयेदेवाय, उग्रायदेवाय, भीमायदेवाय, महादेवाय, ईशानायदेवाय ८ उमासाहितायशिवाय, पार्वतीसहिता-यपरमेश्वराय ॥ विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुर-थाय विघ्नेशाय ८ वल्लभासहितायश्रीमहागणेशाय ॥ ॐ ह्रांह्रींसःसूर्याय सप्ताश्वाय, अनश्वाय. एकाश्वाय, नीला-श्वाय, प्रत्यक्षदेवाय, परमार्थसाराय, तेजोरूपाय ८ प्रभासहितायआदित्याय ॥ भगवत्यै, अमायै, कामा-यै, चार्वङ्ग्यै, टङ्कधारिण्यै, तारायै, पार्वत्यै, यक्षिण्यै, श्रीशारिकाभगवत्यै ८ श्रीशारदाभ०, श्रीमहाराज्ञी-भ० श्रीज्वालाभगवत्यै व्रीडाभ० वैखरीभ० वित-

स्ताभ० गङ्गाभ० यमुनाभ० कालिकाभगवत्यै सिद्ध-
लक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै सहस्रनाम्न्यै-
देव्यैभवान्यै [विष्णुपञ्चायतनदेवताभ्यः] अभयङ्करी-
देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिपत-
ये (अमुकभैरवाय) महागायत्र्यै सावित्र्यै सरस्वत्यै
हेरुकादिभ्यो वटुकादिभ्यो दीपधूपसंकल्पात्सिद्धिरस्तु
दीपोनमः धूपोनमः ॥ (अपसव्येन) नमःपितृभ्यः ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्व
धा च स्वाहा च नित्यमेव भवन्त्विह ॥ [अद्यतावत]
पित्रे [अमुकाया ऽमुकगात्राय] पितामहाय प्रपिता-
महाय । मात्रे (अमुकायै अमुकगात्राय) पितामह्यै-
प्रपितामह्यै ॥ मातामहाय प्रमातामहाय वृद्धप्रमा-
तामहाय । मातामह्यै प्रमातामह्यै वृद्धप्रमातामह्यै ।
समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः ' अमु-



ककर्मनिमित्ते ' दीपःस्वधा धूपःस्वधा ॥ (सव्येन) ॥
ॐगायत्र्यैनमः । ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गोदे-
वस्यधीमहि । धियोयोनःप्रचोदयात् ३ । अद्यतावत् ।
महागणपतेः, कुमारस्य, श्रियः, सरस्वत्यः, ल;
क्ष्म्याः, विश्वकर्मणः, द्वार्देवतानां, प्रजापतेः, ब्रह्म-
णः, कलशदेवतानां । ब्रह्मविष्णुमहेश्वरदेवतानां ।
चातुर्वेदेश्वरस्यसानुचरस्य (ऋतुपतेर्नारायणस्य) दुर्गा-
याः, त्र्यम्बकस्य, वरुणस्य, यज्ञपुरुषस्य, अग्निष्वा_
त्तादीनांपितृगणदेवतानां, भगवतःवासुदेवस्य, सङ्कर्ष-
णस्य, प्रद्युम्नस्य, अनिरुद्धस्य, सत्यस्य, पुरुषस्य,
अच्युतस्य, माधवस्य, गोविन्दस्य, सहस्रनाम्नःवि-
ष्णोः, लक्ष्मीसहितस्यनारायणस्य । भवस्यदेवस्य,
शर्वस्यदेवस्य, रुद्रस्यदेवस्य, पशुपतेःदेवस्थ, उग्र-
स्यदेवस्य, भीमस्यदेवस्य, महादेवस्य, ईशानस्य-

देवस्य, उमासहितस्यशिवस्य, पार्वतीसहितस्यपरमेश्वरस्य । विनायकस्य, एकदन्तस्य, कृष्णपिङ्गलस्य, गजाननस्य, लम्बोदरस्य, भालचन्द्रस्य, हेरम्बस्य, आखुरथस्य विघ्नेशस्य वल्लभासहितस्यश्रीमहागणेशस्य । ॐह्रांह्रींसःसूर्यस्य, सप्ताश्वस्य, अनश्वस्य, एकाश्वस्य, नीलाश्वस्य, प्रत्यक्षदेवस्य, परमार्थसारस्य, तेजोरूपस्य प्रभासहितस्यआदित्यस्य । भगवत्याःअमायाः कामायाः चार्वङ्ग्याः टङ्कधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः ८ श्रीशारदाभ० श्रीमहाराज्ञीभ० श्रीज्वालाभ० श्रीडाभ० वैखरीभ० वितस्ताभ० गङ्गाभ० यमुनाभ, कालिकाभ० सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुरसुन्दर्याः सहस्रनाम्न्याः देव्याःभवान्याः (विष्णुपञ्चायतनदेवतानां) अभयङ्करीदेव्याः क्षेमङ्करीभवा-



न्याः सर्वशत्रुघातिन्याः इहराष्ट्राधिपतेः (अमुकभैरवस्य) । महागायत्र्याः सावित्र्याः सरस्वत्याः हेरुकादीनां वटुकादीनां (आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं नित्यकर्मनिमित्तं) कलशपूजनं विष्णुपञ्चायतनपूजनं क्षेत्रेशपूजनमऽर्चामऽहंकरिष्ये (ॐकुरुष्व) । (तिलसर्षपयवान्विकार्य) । "ऐसा ही" दो २ दर्भों से आसन देना) महागणपतेः कुमारस्य० इदमाऽसनंनमः ॥ (अर्घसहित दो दर्भ रख क आवाहन करना) महागणपतये कुमाराय श्रियै सरस्वत्यै— युष्मान्वः पूजयामि ॐपूजय ॥ महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्माणं द्वार्देवताः प्रजापतिं; ब्रह्माणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं (ऋतुपतिंनारायणं) दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वात्तादीः पितृग-

णादेवताः, भगवन्तंवासुदेवं सङ्कर्षणं, प्रद्युम्न, अनि-
रुद्धं, सत्यं, पुरुषं, अच्युतं, माधवं, गोविन्दं, सह-
स्रनामानंविष्णुं, लक्ष्मीसहितंनारायणं । भवंदेवं, श-
र्वंदेवं, रुद्रंदेवं, पशुपतिंदेवं, उग्रंदेवं, भीमंदेवं, महा-
देवं, ईशानंदेवं, उमासहितंशिवं, पार्वतीसहितंपरमे-
श्वरं । विनायकं, एकदन्तं, कृष्णपिङ्गलं, गजाननं,
लम्बोदरं, भालचन्द्रं, हेरम्बं, आखुरथं, विघ्नेशं, व-
ल्लभासहितंश्रीमहागणेशं । ॐह्रांह्रींसःसूर्यं, सप्ताश्वं, अ-
नश्वं, एकाश्वं, नीलाश्वं, प्रत्यक्षदेवं, परमार्थसारं, ते
जोरूपं, प्रभासहितंआदित्यं । भगवतींअमां, कामां-
चार्वङ्गीं, टङ्कधारिणीं, तारां, पार्वतीं, यक्षिणीं, श्री-
शारिकाभगवतीं, श्रीशारदाभ०, श्रीमहाराज्ञीभ०, श्री
ज्वालाभ०, क्रीडाभ०, वैखरीभ०, वितस्ताभ०, ग-
ङ्गाभ०, यमुनाभ०, कालिकाभ०, सिद्धलक्ष्मीं, म-



हालक्ष्मीं, महात्रिपुरसुन्दरीं, सहस्रनाम्नींदेवींभवानीं,
विष्णुपञ्चायतनदेवताः, अभयङ्करीदेवीं, क्षेमङ्करीभ-
वानीं, सर्वशत्रुघातिनीं, इहराष्ट्राधिपतिं (अमुक भै-
रवं) महागायत्रीं सावित्रीं सरस्वतीं हेरुकादीन्
वटुकादीन् आवाहयिष्यामि ॐआवाहय (यवा-
न्विकीर्य) ॥ "प्राणायामः" ॥ पाद्यार्थमुदकंनमः ॥
शन्नोदेवी रभिष्टये ॥ लाजाश्च कुङ्कुमं चैव सर्वौषधिसम-
न्वितम् । दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम् ॥
भगवन्तः पाद्यं २ ॥ महागणपतये. कुमाराय,० पाद्यं
नमः । (शेषं निवारयेत) पुनः । शन्नोदेवी ॥ आपःक्षीरं
कुशाग्राणि घृतं च दधि तण्डुलाः । यवाः सिद्धार्थकाश्चेति
ह्यर्घ्यमष्टाङ्गमुच्यते ॥ भगवन्तोऽर्घ्यं २ महागणपते कुमार,
श्रीः सरस्वति, लक्ष्मी, विश्वकर्मन्, द्वार्देवताः, प्रजापते,
ब्रह्मन्कलशदेवताः, ब्रह्मविष्णुमहेश्वरदेवताः, चातुर्वेदेश्वर

सानुचर (ऋतुपतेनारायण) दुग, त्र्यम्बक, वरुण, यज्ञ-पुरुष, अग्निष्वात्तादयः पितृगणदेवताः, भगवन्वासुदेव-सङ्कर्षण, प्रद्युम्न, अनिरुद्ध, सत्य, पुरुष, अच्यत, माधव-गोविन्द, सहस्रनामन् विष्णो, लक्ष्मीसहितनारायण । भवदेव; शर्वदेव, रुद्रदेव, पशुपतदेव, उग्रदेव, भीमदेव-महादेव, ईशानदेव, उमासहितशिव, पार्वतीसहितपरमेश्वर विनायक, एकदन्त, कृष्णापिङ्गल, गजानन, लम्बोदर-भालचन्द्र, हेरम्ब, आखुरथ, विघ्नेश, वल्लभासहितश्रीम-हागणेश । ह्रांह्रींसः सूर्य, सप्ताश्व, अनश्व, एकाश्व, नीलाश्व प्रत्यक्षदेव, परमार्थसार, तेजोरूप, प्रभासहितआदित्य । भगवतिअमे, कामे, चार्वङ्गि, टङ्कधारिणि, तारे, पार्वति-यक्षिणि, श्रीशारिकाभगवति, श्रीशारदाभ०, श्रीमहा-राज्ञीभ०, श्रीज्वालाभ० श्रीडाभ० वैखरीभ० वितस्ताभ० गङ्गाभ० यमुनाभ० कालिकाभ० सिद्धलक्ष्मीः महा-


लक्ष्मीः महात्रिपुरसुन्दरि, सहस्रनाग्निदेविभवानिविष्णु-पञ्चायतनदेवताः । अभयङ्करीदेवि, क्षेमङ्करीभवानि स-र्वशत्रुघातिनि, इहराष्ट्राधिपते (अमुक भैरव) महागा-यत्रि, सावित्रि, सरस्वति, हेरुकादयो, वटुकादयः इदंवाऽ र्घ्यंनमः ॥ महागणपतये. कुमाराय० समलभनं गन्धो-नमः ॥ महागणपतये० अर्घोनमः पुष्पंनमः ॥ महागण-पतये दीपधूपसंकल्पात्सिद्धिरस्तु दीपोनमः धूपोनमः ॥ महागणपतये० वासोनमः ॥ (महागणपतेः) एतासां देवतानामऽर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ अन्नंनमः २ आज्यं २ अद्यदिने अद्ययथासंकल्पात्सिद्धि-रस्तु, अन्नहीनं क्रियाहीनं विधिहीनं द्रव्यहीनं मन्त्रहीनं यद्गतंतत्सर्वमऽच्छिद्रं सम्पूर्णमऽस्तु एवमऽस्तु ॥ शन्नो-देवी ॥ एताभ्यो देवताभ्यः (महागणपतये) अपोशा-नंनमः, आचमनीयंनमः ॥ पुनः । शन्नोदेवी । (महाग-

णपतये ) एताभ्योदेवताभ्यः दक्षिणायै तिलहिरण्यरजतनिष्कर्णं ददानि ॥ ( महागणपतिः ) एता देवताः स दक्षिणान्नेन प्रीयन्तां प्रीताः सन्तु ॥ ( कलशेपुष्पं ) ॐ तद्विष्णोः परमं पदं०२ ॥ ( जप आदि कर के ॥ ) ॥ अथ व्याहृतिः "जलाईहुई अग्नि के ईशानकोण पर त्रिष्टर तिल अक्षत फूल और पानीवाला रखेहुई प्रणीतपात्र में, और अग्नि में तिल छोडना" पात्रं तिलाऽक्षतैर्मिश्रं कुसुमोदकविष्टरैः । अग्नेश्चैशानदिग्भागे प्रणीतमऽभिधीयते ॥ प्रणीतं नैर्ऋते स्थाप्यं स विष्णुर्नाऽत्र संशयः । ( संव्वःसृजामीति द्वाभ्यां पुष्पाणां त्रितयं क्षिपेत् )॥ ( पात्र में तीन दफा तीन मन्त्रों से फूल छोडना ) संव्वःसृजामि हृदयं सस्रृष्टं मनो अस्तुवः । संसृष्टास्तन्वः सन्तुवः संसृष्टःप्राणो अस्तुवः ॥ संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु संप्रियः संप्रियास्तन्वो मम ॥ ( अग्नि में जलाईहुई



दो दर्भकाण्ड दाहे तर्फ छोडना ) निर्दग्धं रक्षो निर्दग्धारातिरऽपाग्ने । अग्निमाऽमादं जहि निष्क्रव्यादं सीदा देवयजनं वह ॥ ( प्राणायामं कुर्यात् ) ॥ ऋतन्त्वा सत्येन "अग्नि" परिसमूहामि, सत्यन्त्वर्तेनपरिसमूहामि, ऋतसत्याभ्यांत्वापरिस०, । ऋतन्त्वा सत्येन पर्युक्षामि, सत्यन्त्वर्तेनपर्युक्षामि, ऋतसत्याभ्यां त्वापर्युक्षामि, ऋतन्त्वा सत्येन परिषिञ्चामि०, सत्यन्त्वर्तेनपरिषिञ्चामि, ऋतसत्याभ्यांत्वापरिषिञ्चामि ॥ (अग्नि के चार दिशायों को पूर्वोत्तराग्र चार दर्भकाण्ड छोडना ) यज्ञस्य सन्ततिरसि यज्ञस्यत्वा सन्तत्यै स्तृणामि ॥ ( पुरस्तात्, दक्षिणतः, उत्तरतः, पश्चात्, ) इतिस्तरैःपरिस्तीर्य ॥ ( दो दर्भकाण्ड जला कर यवा, तिल, घी, दही और मिठासरूप पञ्चामृत हवि में लगाना )इदं हविःप्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये, आत्मसनि प्रजासनि पशुसनि अभयसनि लोकस-

नि अग्निः प्रजां बहुलां मे करोतु अन्नं पयो रेतो अस्मासु दत्त (घृतेन संलिप्य श्रुतमऽभिघार्य) ॥ '(अग्नि को गन्ध व फूल लगाना) अग्नये शुकारूढाय स्वाहासहिताय पावकाय त्रिनेत्राय तेजोरूपाय शक्तिहस्ताय समालभनं गन्धोनमः अर्घोनमः पुष्पंनमः॥ (विस्तार होने पर (गायत्रीब्राह्मण सम्पूर्ण देना) और संक्षेप पर ॥ जैसा। अग्नि को फूल) मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाऽभयाऽङ्कुशकरां शूलं कपालं गुणं शंखं चक्रमऽथाऽरविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्रि छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते ॥३॥ महाव्याहृतयः प्रजापतेः ॥ ( आहुति अनवच्छिन्न देना ) ॐ अग्नयेस्वाहा, ओंभूःस्वाहा, ओंभुवःस्वाहा, ओंस्वःस्वाहा, ओंभूर्भुवःस्वःस्वाहा ॥ ओंभूःस्वाहा, ओंभुवःस्वा-



हा, ओंस्वःस्वाहा, ओंमहःस्वाहा, ओंजनःस्वाहा, ओंतपःस्वाहा, ओंसत्यंस्वाहा, ओंतत्सवितुर्वरेण्यं० ३॥ (फूल) (अश्वमेध घोराणामार्षम्) (पृ२ से) नकल्पतां(पृ१३·) तक देकर, फूल चतुर्भुजामऽर्कसहस्रकोटिभां त्रिलोचनां हारकिरीटशोभिताम् । चतुर्मुखस्याङ्कगतां महोज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥ (आहुती) ओं ओजोसि० ॥ देवाश्च वा असुराश्च संय्यन्ता आसंस्तान्गायत्र्याऽन्तरातिष्ठदोजो वै वीर्यमन्नाद्यं परिगृह्य संवत्सरो वा वैनान्सोऽन्तरातिष्ठच्चतुर्विंशतिर्गायत्र्या अक्षराणि चतुर्विंशतिः संवत्सरस्याऽर्धमासास्ते विदुर्यतरान्वा इयमुपवत्स्यति त इदं भविष्यन्तीति तं व्याह्वयन्त दाभीत्यऽसुराह्वयन् विश्वकर्मन्निति देवासस्तान्यतरांश्च नोपवर्तत ते देवा एतद्यजुरऽपश्यन्नोजोसि सहोऽसि बलमऽसि भ्राजोसि देवानां धामनामासि विश्वमासि विश्वायुः सर्वमसि सर्वायुरभिभूरि-

ति स देवानुपावर्तत ततो देवा अभवन् पराऽसुरा अ-
भवन्नाऽग्नेय्यमऽष्टाकपालं निर्वपेद्भ्रातृव्यवान्वा स्पर्धमा-
नो वा तमाऽसाद्यैतैर्यजुर्भिरऽभिमृशेदोजो वै वीर्यं संव-
त्सरश्रोज एव वीर्यंभ्रातृव्यस्य वृंक्ते, स निर्वीर्यः पराभ-
वति सैषा गायत्रीनामेष्टिरऽथो आहुः क्षेत्रस्य संवर्गइति।
श्रीमहागायत्र्यैस्वाहा, सावित्र्यैस्वाहा, सरस्वत्यैस्वाहा ॥
अनेन मन्त्रहोमेन आत्मनोवाङ्मनःकायोपार्जितपापनि-
वारणार्थं अमुककर्मनिमित्तं महागायत्रीप्रीत्यर्थं महागा-
यत्री सावित्री सरस्वती सव्याहृतिः प्रीयतां प्रीताऽस्तु॥
[आहुति] अध्वर्योऽयं यज्ञो अस्तु देवा [पृ११-८] से पितृ-
गणदेवताभ्यःस्वाहा [प्रधानदेवताभ्यः स्वाहा] विस्तार पर
पूरुषसूक्तलक्ष्मीसूक्तौ ऊँतद्विष्णोः। भगवतेवासुदेवायस्वा-
हा जरामुपगच्छेम जीवाः [पृ१८-७] इत्यन्तं हुत्वा। तर्पणं।
अनेनमन्त्रहोमेन आत्मनो [वाङ्मनःकायोपार्जितपापनि-



वारणार्थं अमुककर्मनिमित्तं] महागणपतिः, कुमारः, श्रीः
सरस्वती, लक्ष्मीः, विश्वकर्मा, द्वार्देवताः, प्रजापतिः,
ब्रह्मा, कलशदेवताः, ब्रह्मविष्णुमहेश्वरदेवताः, चातुर्वेदे-
श्वरः सानुचरः, (ऋतुपतिर्नारायणः) दुर्गा, त्र्यम्बकः,
वरुणः, यज्ञपुरुषः, अग्निष्वात्तादयः पितृगणदेवताः,
[स्वेष्टयागदेवताः] भगवान्वासुदेवः, सङ्कर्षणः, प्रद्युम्नः
अनिरुद्धः, सत्यः, पुरुषः, अच्युतः, माधवः, गोविन्दः,
सहस्रनामाविष्णुः, लक्ष्मीसहितोनारायणः। भवोदेवः,
शर्वोदेवः, रुद्रोदेवः, पशुपतिर्देवः, उग्रोदेवः, भीमोदे-
वः, महादेवः, ईशानोदेवः, उमास-शिवः, पार्वतीस-प-
रमेश्वरः। विनायकः, एकदन्तः, कृष्णपिङ्गलः, गजाननः,
लम्बोदरः, भालचन्द्रः, हेरम्बः, आखुरथः विघ्नेशः, वह्न-
भास-श्रीमहागणेशः। ऊह्रांह्रींसःसूर्यः, सप्ताश्वः, अनश्वः
एकाश्वः, नीलाश्वः, प्रत्यक्षदेवः, परमार्थसारः, तेजोरू-

पः, प्रभास–आदित्यः। भगवतीअमा, कामा, चार्वङ्गी, टङ्कधारिणी, तारा, पार्वती, यक्षिणी, श्रीशारिकाभगवती, श्रीशारदाभ, श्रीमहाराज्ञीभ, श्रीज्वालाभ, श्रीडाभ, वैखरीभ, वितस्ताभ, गङ्गाभ, यमुनाभ, कालिकाभ, सिद्धलक्ष्मीः, महालक्ष्मीः, महात्रिपुरसुन्दरी, सहस्रनाम्नीदेवीभवानी, अभयंकरीदेवी, क्षेमंकरीभवानी, सर्वशत्रुघातिनी, इहराष्ट्राधिपतिः [अमुकभैरवः] महागायत्री, सावित्री, सरस्वती, हेरुकादयो वटुकादयः, यवतण्डुलहोमैःप्रीयंतांप्रीताःसन्तु॥ इति व्याहृतिः॥ अथ वैश्वदेवम्॥ ("पकाईहुई अन्न या रोटी घीयुक्त को जुलाईहुई दो कर्मकाण्ड लगाना,) वैश्वदेवस्य सिद्धस्य सर्वतोऽग्रयस्य अन्नस्य जुहोतिपाकस्य घृतेन संलिप्य यजमानाय स्वस्त्यस्तु शृतमभिघार्य। आहुति। आदौ, अग्नयेस्वाहा इत्युत्तरतः। सोमायस्वाहा इति दक्षिणतः। तयोर्मध्ये, मित्राय-



स्वाहा, वरुणाय, इन्द्राय, इन्द्राग्निभ्यां, विश्वेभ्योदेवेभ्यः प्रजापतये, अनुमत्यै, धान्वन्तरये, वास्तोष्पतये, वासुदेवाय, संकर्षणाय, प्रद्युम्नाय, अनिरुद्धाय, सत्याय, पुरुषाय, अच्युताय, माधवाय, गोविन्दाय, सहस्रनाम्नेविष्णवे, लक्ष्मीसाहितायनारयणायस्वाहा॥ अमृतेशमुद्रया 'इति नैवेद्यं. साविात्राणि–महागणपतये–हेरुकादिभ्योवटुकादिभ्यः। उत्पन्नममृतं दिव्यं प्राक्क्षीरोदधिमन्थनात्। अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यतां। शान्ताकारं०। अद्यताव त् अमुककर्मनिमित्तं ऊँनमोनैवेद्यंनिवेदयामिनमः॥ पूर्वाग्रान्दर्भानाऽस्तीर्य॥ तक्षायनमः, उपतक्षाय, अम्बानामासि-नमस्ते, दुलानामा-, नितत्नीनामा-, चुपनीकानामा, अभ्रयन्तीनामा-, मेघयन्तीनामा-, वर्षयन्तीनामासि–नमस्ते, नन्दनि–नमस्ते, १० सुभगे–न-, सुमङ्गलि–न-, भद्रङ्करि-नमस्ते, श्रियैहिरण्यकेश्यैनमः, वनस्पतिभ्योनमः, धर्मा-

य, अधर्माय, मृत्यवे, मरुद्भ्यो, वरुणाय २० विष्णवे, वैश्रवणायराज्ञे, भूतेभ्यो, इन्द्राय, इन्द्रपुरुषेभ्यो, यमाय, यमपुरुषेभ्यो, सोमाय, सोमपुरुषेभ्यो, वरुणाय ३० वरुणपुरुषेभ्यो, ब्रह्मणे, ब्रह्मणपुरुषेभ्यो, "ऊर्ध्वं" आकाशाय "स्थण्डिले" दिवश्चरेभ्योभूतेभ्यो, नक्तञ्चरेभ्योभूतेभ्योनमः ३६ । षट्त्रिंशत्तत्तादिभ्योऽन्नंनमः, आचमनीयंनमः । अपसव्येन । "दक्षिणाग्रान्दर्भानास्तीर्य" समस्तमातापितृभ्योद्वादशदैवतेभ्यः पितृभ्यो भूपृष्ठे दर्भास्तरणे तिलोदकेनाऽवनेजनंस्वधा । "अङ्गुठ फिरावना," उशन्तस्त्वा हवामह उशन्तः समिधीमहि । उशन्नुशत आवह पितॄन्हविषे अत्तवे ॥ तिलास्तोयं तथाक्षीरं दीपधूपौ बलिस्तथा । मधुसर्पिःसमायुक्तमष्टाङ्गमऽन्नसम्भवम् ॥ वामजानुं भूमौ निधाय । देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच । नमः स्वधा च स्वाहा च नित्यमेव भवन्त्विह । ३ ॥ अ-



द्यतावत्-पितः अमुकाऽमुकगोत्र एतत्तेऽन्नं येचत्वाऽनु । पितामह अमु०, प्रपितामह अमुका०, । ३ ॥ मातः अमुके अमुकगोत्र एतत्तेऽन्नं याश्चत्वाऽनु । पितामहि अ०, प्रपितामहि अमुके०, । ६ ॥ एवं । मातामह, प्रमातामह, वृद्धप्रमातामह-येचत्वानु । ९ ॥ मातामहि, प्रमातामहि, वृद्धप्रमातामहि-याश्चत्वाऽनु १२ इत्थं भ्रातः एतत्तेऽन्नं । सर्वास्तर्पयेत् ॥ मातृपक्षयास्तु येकेचिद्ये चान्ये पितृपक्षजाः । गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः । ये प्रेतभावमापन्ना येचान्ये श्राद्धवर्जिताः ॥ अन्नदानेन ते सर्वे लभन्तां तृप्तिमुत्तमाम् । समस्तमातापितृभ्यो-हिमपानंस्वधा, समस्तमातृ क्षीरपानंस्वधा, मधुपानंस्वधा, तिलोदकंस्वधा, उदकतर्पणंस्वधा, हिमंहिमं, रजतंरजतं ॥ सव्येन । वसन्तायनमः ग्रीष्माय, वर्षाभ्यो, शरदे, हेमन्ताय, शिशिराय, षडृतुभ्योनमः । अग्नयेस्विष्टकृतेस्वाहा । इति ईशाने, हस्तौ प्र-

क्षाल्य । प्राणायामः ॥ ऋतन्त्वा सत्येनाऽग्निं विमुञ्चामि, सत्यन्त्वर्तेनाविमुञ्चामि, ऋतसत्याभ्यां त्वा विमुञ्चामि ३ यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यै नयामि ॥ धर्मं देहि धनं देहि पुत्रपौत्रांश्च देहि मे । आयुरारोग्यमैश्वर्यं देहि मे हव्यवाहन ॥ भक्तिं देहि श्रियं देहि सुखं देहि स्वतन्त्रताम् । देहि भोगं च मोक्षं च मनोऽभिलषितं मम ॥ गच्छगच्छ सुरश्रेष्ट ब्रह्मविष्णुमहेश्वराः । यत्र देवालयाः सर्वे तत्र गच्छ हुताशन ॥ तेजोऽसि तेजो मयि देहि । इस्यात्मानं देहि । भगवन्सन्निधत्सु । भगवन्यक्ष्म एतत्तेऽन्नंनमः, एतत्ते आचमनीयंनमः । कण्ठोपवीती । हन्त मनुष्येभ्यःसनकादिभ्यऋषिभ्योऽन्नंनमः. आचमनीयंनमः सव्येन । याकाचिद्योगिनी रौद्रा सौम्या घोरतरा परा । खेचरी भूचरी रामा तुष्टा भवतु मे सदा । आकाशमातृभ्योऽन्नंनमः समालभनंगन्धोनमः, अर्घोनमःपुष्पंनमः ॥



ततोगोग्रासादि ॥ सौरभेयाः स्वर्गहिताः पवित्राः पुण्यराशयः । प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः [गोभ्योऽन्नंनमः] ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिकाश्चये । वायसाः प्रतिगृह्णन्तु त्विमं पिण्डं मयोद्धृतम् [ काकेभ्योऽन्नंनमः ] श्वानौद्वौ शावशबलौ वैवस्वतकुलोद्भवौ । ताभ्यांपिण्डं प्रदास्यामि स्यातामेतावऽहिंसकौ (श्वानकेभ्योऽन्नंनमः) । अपसव्येन । रौरवाधीनसत्त्वानां प्रेतद्वारनिवासिनाम् । अर्थिनां याचमानानामऽक्षय्यमुपतिष्ठतु ॥ सव्येन । शुनां च पतितानां च श्वपचां पापरोगिणाम् । वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि ॥ देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः । प्रेताः पिशाचास्तरवः समस्ता येचान्नमिच्छन्ति मया प्रदत्तम् ॥ पिपीलिकाःकीटपतङ्गाद्या बुभुक्षिताः कर्मणि बद्धबद्धाः । प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो

विसृष्टं सुखिनो भवन्तु ॥ येषां न माता न पिता न ब-
न्धुर्नैवान्नसिद्धिर्न तथान्नमस्ति । तत्तृप्तयेऽन्नं भुवि दत्त-
मेतत्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ भूतानि सर्वाणि
तथान्नमेतदऽयं च विष्णुर्न ततोऽन्यदऽस्ति । तस्मादहं भू-
तनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ चतुर्दशो
भूतगणो य एष तत्रास्थिता येऽखिलभूतसंघाः । तृप्त्यर्थ-
मन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु ॥ इ-
त्युच्चार्य नरो दद्यादऽन्नं श्रद्धासमन्वितः । भुवि भूतो-
पकाराय गृही सर्वाश्रयो यतः ॥ अपसव्येन । यमाय
धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय
सर्वप्राणहरायच ॥ औदुम्बराय नीलाय अघ्नाय परमेष्ठिने ।
वृकोदराय भीमाय चित्रगुप्ताय वै नमः । पाशहस्तकृ-
तान्ताय प्रेताधिपतयेनमः ॥ श्रीयमराजधर्मराजचित्रगु-
प्ततृप्तयेऽस्तु ॥ सव्येन ॥ ये विश्वभाविनो भूता येचते-



ऽवनुयायिनः । आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शिवं
मम ॥ योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः सकिङ्करः ।
तस्मै निवेदयाम्यऽद्य बलिं पानीयसंयुतम् ॥ क्षांक्षे-
त्राधिपतयेऽन्ननमः, रांराष्ट्राधिपतयेऽन्ननमः, सर्वाभ-
यवरप्रदो मयि पुष्टिं पुष्टिपतिर्ददातु ॥ अपसव्येन ॥ आ-
युः प्रजां धनं विद्यां स्वर्गमोक्षौ सुखानि च । प्रय-
च्छन्तु तथा राज्यं नृणां प्रीताः पितामहाः ॥ एष पिण्डो
मया दत्तस्तव हस्ते जनार्दन । गयायां पितृरूपेण स्वय-
मेवोपगृह्यताम् ॥ आत्मनश्चार्थलाभाय क्षेमाय विजयाय
च । शत्रूणां बुद्धिनाशाय पितृनुद्धरणाय च ॥ पञ्च-
क्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिला । यत्र तत्र स्मरे-
न्नित्यं पितृणां दत्तमक्षयम् ॥ इतिवैश्वदेवम् । अथ कलशा-
पृच्छां विसृज्य ॥ ॐगायत्र्यैनमः ॐभूर्भुवःस्वस्त ३
अद्यतावत् महागणपतेः कुमारस्य' श्रियः' सरस्वत्याः

लक्ष्म्याः, (पृ २६ ) कलशपू० क्षेत्रेशपूजनमऽच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्योदेवताभ्यो यवोदकंनमः उदकतर्पणंनमः । अज्ञा मे दीयतां नाथ नैवेद्यस्यास्य भक्षणे । शरीरयात्रासिद्ध्यर्थं भगवन्क्षन्तुमऽर्हसि ॥ आपन्नोस्मि शरण्योऽसि सर्वावस्थासु सर्वदा । भगवंस्त्वां प्रपन्नोस्मि रक्षमां शरणागतम् ॥ ईशानविष्णुकमलासनकार्तिकेयवह्नित्रयार्करजनीशगणेश्वराणाम् क्रौञ्चामरेन्द्रकलशोद्भवकश्यपानां पादं नमामि सततं पितृमुक्तिहेतोः ॥ कालिकलुषविमुक्तः पूजितः सिद्धसंघैरऽमरचमरमालावीजमानोऽप्सरोभिः । पितृशतमऽपि बन्धून्पुत्रपौत्रान्प्रपौत्रानपि नरकनिमग्नांस्तारयेद्विष्णुरेव ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । केयुरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः । यद्बाल्ये यत्तु कौमारे यद्यौवने



कृतं मया । वयःपरिणतौ यच्च यच्चजन्मान्तरेष्वपि ॥ तन्नारायणगोविन्द क्षमस्व गरुडध्वज । नीलोत्पलदलश्यामः प्रफुल्लजलदेक्षणः । जलशायी जगद्योनिः प्रयतां मम केशवः ॥ अपारसंसारमहाम्बुद्धिप्लवः समस्तपापेन्धनहव्यवाहनः । विपद्द्रुमोन्मूलनचण्डमारुतो नमश्शिवायेति ममास्तु सज्जपः ॥ माता यस्य उमादेवी पिता यस्य महेश्वरः । मूषको वाहनं यस्य स नः पायाद्गणाधिपः ॥ जातवेदप्रकाशाय बीजरूपेण तिष्ठत । सप्ताश्वरथवाहाय भास्कराय नमोनमः ॥ अपरः शरणं नास्ति त्वमेवशरणं मम । तस्मात्कारुण्यभावेन रक्षरक्ष दिवाकर ॥ तां भवानीं भवानीतक्लेशनाशविशारदाम् । शारदां शरदऽम्बोजसितसिंहासनांनमः । क्षमध्वं मम क्षेत्रेशा ददध्वं सुखसम्पदः । खगोपातालदिक्संस्थास्तुष्टा यांतु स्वकं पदम् ॥ आह्वानं नैव जानामि नैव जानामि पूजनम् ।

माणो जागृवेऽरुन्धतीति यज्ञो वै दक्षिणाऽरुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेट्टे आत्मनो गोपीथाय ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धि-नाशोऽस्तु मित्रणामुदयस्तव ॥ मार्कण्डेयमुनेः स्वर्गवैद्य-योः स्वर्पतेः समम् । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते जीवत्वं शरदः शतम ॥ इति वैश्वदेवव्याहृतियुतब्रह्मकल

शार्चनम् ॥

अथ पर्वतन्त्रविधिः ( पञ्चयागविधिः ) ब्रह्मकलशं शालि-चूर्णेनोल्लिख्य । अभि नो देवी–(पृ१) से पितृगणदे-वताभ्योनमः । [ पृ१४-] तक करके। ( प्रधानं, पौर्ण-मास्यां ) भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे स्वर्षां जिह्वा-मऽग्ने चकृषे हव्यवाहंनमः ॥ आन्यन्दिवो मातरिश्वा जभारा मथ्नादऽन्यं परिश्येनो अद्रेः । अग्नीषोमा ब्र-



ह्मणा वावृधानोरुं यज्ञाय चक्रथुरुलोकंनमः॥ युवमे-तानि दिवि रोचनान्यऽग्निश्च सोम सक्रतू अधत्तम् । युवं सिन्धूनऽभिशस्तेरऽवद्यादऽग्नीषोमा अमुञ्चतं गृ-भीतंनमः ॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वऽधिक्षि-यन्ति भुवनानि विश्वानमः । ४ [ अथाऽमावस्यायां ] भुवो यज्ञस्य– ॥ उभा वामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभा दातारा इषां रयीणा-मुभा वाजस्य सातये हुवे वां नमः ॥ येकेचज्मा म-हिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे । ते अ-स्मभ्यमिषये विश्वमायुः क्षपा उस्रा वरिवस्यन्तु देवा नमः ॥३ ॥ ॐतद्विष्णोः परमं–विष्णुपञ्चायतनदेवता-भ्योनमः । ऐन्द्राग्नं ॥ ( पृ १४ से २२ तक ) ॥ यजमान-मानीयपूजा ॥ अनाभौ । तीर्थेस्थेयं । अद्य तावत्

(पृ २२ से २६ तक) महागणपतये–अग्नये अग्नीषोमाभ्यां
इतिपौर्णमास्यां । अग्नये इन्द्राग्निभ्यां इत्यमावस्यां ।
विष्णुपञ्चायतनदेवताभ्यः हेरुकादिभ्यः दीपोनमः ।
दक्षिणान्तं ॥ पात्रं तिलाक्षतैर्मिश्रं– [पृ ३६ से] अस्मा-
सु दत्त । शृतमऽभिघार्य [पृ ३८ तक करके] । सूर्या-
यस्वाहा, प्रजापतयेस्वाहा; ऋतन्त्वा सत्येनाग्निंविमुञ्चा
मि, सत्यन्त्वर्तेन विमुञ्चामि, ऋतसत्याभ्यान्त्वा विमु-
ञ्चामि ॥ यज्ञस्य सन्तातिरासि यज्ञस्य त्वा सन्तत्यै न-
यामि ॥ पुनरग्निं परिसमूह्य. पर्युक्ष्य. परिषिच्य ६॥
यज्ञस्य–स्तृणामि ॥ [ आदौ पञ्च पुनस्त्रीणि त्रीणि प-
ञ्च विधानवित् । अध्वर्युः प्राङ्मुखो भूत्वा दद्यात्षोडश
वै स्तरात ॥ उत्तरतः संस्तीर्णे पात्राणि द्वन्द्वं प्रयु-
नक्ति दर्भोपयामं, शूर्पस्रुचं दर्भकृष्णाजिनमुलूखलमु-
सुलं दर्भपात्रे, चरुमेक्षणं, दर्भाऽज्यधानी, स्रुकस्रुवा-



वाऽघारसमिधौ, व्रीहीन्यवान्वोपसाद्य पाणी प्रक्षाल्य
सशूर्पा स्रुचमादाय, अग्नौ प्रतिताप्य चतुर्भिर्मुष्टिभिः
स्रुचं पूरयित्वा सावित्रादिना यथादेवतं निर्वपति । (सा-
वित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनो
र्बाहुभ्यां पूष्णोहस्ताभ्यामाददे । अग्नयेअग्नीषोमाभ्यां
इति पौर्णमास्यां । अग्नये इन्द्राग्निभ्यां इति अमावा
स्यां पर्वतत्रयागदेवताभ्यः ) जुष्टं निर्वपामि ॥ वि-
ष्णोर्मनसेति दर्भौ पवित्रमुन्मृज्य समावच्छिन्नाग्रौ द-
र्भौ प्रादेशमात्रौ पवित्रीकरोति ( भृग्वऽङ्गिरसामार्षम )
विष्णोर्मनसा पूते स्थः, ताभ्यां देवोव इति च्युदकमु-
त्पूय अङ्गुष्ठोपकानिष्ठिकाभ्यामुत्तानाभ्यां पाणिभ्यां उदग
ग्रौ दर्भावादाय प्राचीनमुत्पुनाति सकृन्मन्त्रेण द्विस्तूष्णीं ।
देवोवः सवितोत्पुनात्वऽच्छिद्रेण पवित्रेण सूर्यस्यरश्मि-
भिः सावित्रादिनायथादेवतं प्रोक्षति । सावित्राणि–जु

छुंप्राच्चामि ॥ पात्राणि च तूष्णीं न्यश्चि पात्राणि प्रयुनक्ति उत्तानानिकृत्वा प्रोक्षति ततोव्रीहीनऽवहन्ति त्रिः सुफलीकृतान् निस्तुषान्करोति उत्पूयापोऽधिश्रयति प्रक्षाल्य तण्डुलान्पवित्रान्तर्हितानाऽवपति प्रक्षाल्याऽग्रतो मेक्षणमऽवददाति ॥ उल्मुकेन त्रिः परिहरति न चरु पयःसु पर्यग्नीकरणमितिलौगाक्षिः । पयो वर्जं सर्वत्रेत्यात्तभागः । पृश्न्याः पय इति पूतमाज्यमाज्यस्थाल्यामाऽसिञ्चति सूर्यस्यार्षम् ॥ पृश्न्याः पयोऽसि तस्य तेऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामि ॥ पञ्चानान्त्वा देवताभ्यो गृह्णामीतिगृहीत्वा (यतीनां भृगूणां स्यूमरश्मेः सुरश्मेः पृथुरश्मेरिति ) पञ्चानान्त्वा वातानां धर्त्राय गृह्णामि , पञ्चानान्त्वा सालिलानां धर्त्रायगृह्णामि, पञ्चानांत्वा पृष्ठानां धर्त्राय गृह्णामि, पञ्चानान्त्वा दिशां धर्त्रायगृह्णामि, पञ्चाना-



न्त्वा पञ्चजनानां धर्त्रायगृह्णामि ॥ भूरस्माकं हव्यं देवानामाऽशिषो यजमानस्य चरोस्त्वा पञ्चबिलस्य धर्त्रायगृह्णामि । धामासि प्रियन्देवानामऽनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णाभि "देवेभ्यस्त्वा देवयज्ञेभ्यो गृह्णामि ॥ ऊर्जेत्वेत्यग्नावधिश्रयति देवानामार्षम् ॥ ऊर्जेत्वा । अग्नेर्जिह्वेति वेद्यां पवित्रेणोत्पुनात्युदकोत्पवनवत् ॥ अग्नेर्जिह्वासि सुपूर्देवेभ्यो धाम्नेधाम्ने त्वा यजुषेयजुषे ॥ हविरसीति यजमानो वीक्षते । (पेन्द्रावकाशः ) हविरसि वैश्वानरमुन्नीतशुष्मं सत्यौजाः सहोनामासि सहस्वाऽराति सहस्वाऽपृतनायतः सहस्रवीर्यमऽसि, तन्मा जिन्वाऽज्यस्याऽज्यमासि हविषोहविः सत्याभिघृतमसि सत्येन त्वाऽभिघारयामि सत्यं वैचक्षुः ( आत्मनो वाङ्मनः कायोपार्जितपापनिवारणार्थं गार्हपत्यफलभूतस्वर्गापवर्गप्राप्त्यर्थं अग्नये अग्नीषोमाभ्या-

।मितिपूर्णमास्य अग्नये इन्द्राग्निभ्यायित्यमावस्यां पर्वत-
त्रयागदेवताभ्यः अग्नये वैश्वानराय इदमाज्यमऽर्पयामि
नमः ॥ अथ पत्न्यवेक्षणम् ॥ इषेत्वा अदब्धेनत्वा च-
क्षुषाऽवपश्यामि रायस्पोषाय सुप्रजस्त्वाय सुवीर्याय
दम्पत्योरायुष्कामनासिद्ध्यर्थे अग्नये वैश्वानराय इदमाज्य-
मर्पयामिनम ॥ अभ्युक्ष्यपवित्रमग्नौ अभ्यादधाति स्रु-
क्स्रुवौ प्रतिताप्य उपयामाग्रैः समार्ष्टि, स्रुवमग्रेऽथ स्रु-
चमऽग्निमऽभिबिलं कृत्वा अग्रैःपात्रं संमार्ष्टि मूलैर्दण्ड
सर्वतःस्रुवं पुरस्तात्प्राचीं स्रुचमऽधस्तात्प्रतीचीं यथा
संमृष्टमऽभ्युक्ष्य प्रातिताप्य संमार्जनान्यऽग्नौ प्रहरति; उप-
यामेस्रुचमादाय तस्यां चतुर्गृहीतमुद्धृत्य 'तजोसि शु-
क्रमासि ज्योतिरासि धामासि" आस्तीर्णेतां निधाय
अभ्युक्ष्याघारसमिधौ अग्नेरभित ऊर्ध्वे आदधाति उत्त-
रांप्रथमां दाक्षिणां द्वितीयां शृतं चरुमऽभिघार्य, तमु-



दगुद्वासयति तत्र चाभिघार्य अलङ्कृत्य पात्र्यां साद-
यत्यऽभिघार्य बर्हिष्यासादयति पूर्वमाज्यमऽपरं स्थाली-
पाकमभिघार्य । स्रुवमाऽज्यपूर्णं दक्षिणतःस्रुचो बर्हिषि
निदधाति; परिस्तीर्यवेदिमुदक्तूलमासनमास्तीर्य तत्रो-
पविश्याऽग्निमभ्युक्ष्य ॥ ज्वालामण्डितमाकाशं साक्ष-
मालाकमण्डलुम् । त्रिनेत्रं पञ्चवक्त्रं च होमकाले तु चि-
न्तयेत् ॥ शुकपृष्ठगतंदेवं शक्तिहस्तंचतुर्भुजम् । मृगा-
जिनेनसन्नद्धं पुष्पवर्णं हुताशनम् ॥ अग्नये वैश्वानरा-
य शुकारूढाय स्वाहासहिताय पावकाय त्रिनेत्राय ते-
जोरूपाय शक्तिहस्ताय समालभनंगन्धोनमः अर्घोनमः
पुष्पंनमः ॥ दर्भोपयामपाणिः स्रुवेणाऽघारं कुमारस्य
याम्यायनस्य (मनसा) प्रजापतयेस्वाहा ॥ तिष्ठन्स्रुचा।
ऊर्ध्वो अध्वरो दिवस्पृगऽह्रुतो यज्ञो यज्ञपतेरिन्द्रवान्बृ-
हद्भाःस्वाहा ॥ ततउपविश्य ॥ युक्तःपुरस्तादितिपञ्चभि-

राज्यस्य जुहोति । (ब्रह्मण आर्षम् ॥ युक्तःपुरस्ताद्बृहद्-
व्यमऽग्नेऽग्रे विद्धि क्रियमाणं मयेदम् । त्वं भिषग्भेषज-
स्यास्य गोप्ता त्वया प्रसूता गामऽश्वं पुरुषं सनेमस्वाहा॥
हृदा पूतं मनसा जातवेदो विश्वान्यग्ने वयुनानि विद्वान् ।
सप्तास्यानि तव यान्यग्ने तेभ्योजुहोमि स जुषस्व हव्यं
स्वाहा॥ यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति
पुरुषस्य कर्म । तेभ्य एतद्भागधेयं जुहोमि ते मे नृप्ताः
काममऽनुतर्पयन्तुस्वाहा ॥ अग्नाअग्निश्चरति प्रविष्ट ऋ-
षीणां पुत्रो अधिराज एषः । स नः सूनुः सयुजायुजा
च मा देवानां रीरिषद्भागधेयं मोऽस्मभ्यं रीरिषद्भाग-
धेयंस्वाहा ॥ प्रजापतेनहित्वदन्य एता विश्वा जातानि
परिता बभूव । यत्कामास्ते जुहोमस्तन्नो अस्तु वयं
स्याम पतयो रयीणांस्वाहा ॥५॥ आयुषःप्राणमित्ये
कादश नाभर्भौवनस्यार्षम् ॥ आयुषःप्राणं सन्तनुस्वाहा



प्राणाद्व्यानं सन्तनुस्वाहा व्यानादऽपानं सन्तनुस्वाहा
अपानाच्चक्षुः सन्तनुस्वाहा चक्षुषःश्रोत्रं सन्तनुस्वाहा
श्रोत्राद्वाचं सन्तनुस्वाहा वाचआत्मानं सन्तनुस्वाहा
आत्मनःपृथिवीं सन्तनुस्वाहा पृथिव्या अन्तारिक्षं सन्त-
नुस्वाहा अन्तरिक्षाद्दिवं सन्तनुस्वाहा दिवःस्वः सन्त-
नुस्वाहा ॥ आकूतामितित्रयोदश जया (जयानां चित्राव
लाकस्य सौरेः) आकूतंचस्वाहा आकूतिश्चस्वाहा आ-
धीतंचस्वाहा आधीतिश्चस्वाहा विज्ञातंचस्वाहा विज्ञा-
तिश्चस्वाहा चित्तंचस्वाहा चित्तिश्चस्वाहा नामचस्वाहा
क्रतुश्चस्वाहा दार्शश्चस्वाहा पौर्णमासश्चस्वाहा प्रजाप-
तिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु । तेभि-
र्वाजं वाजयन्तो जयेम तेनेमा विश्वाः पृतना अभिष्वा-
मस्वाहा ॥१३॥ बृहस्पतिपुरोहिता इत्यऽभ्यातानांदेवा-
नाम ॥ बृहस्पतिपुरोहिता देवा देवानां देवादेवाः प्रथ-

मजा देवादेवेषु पराक्रमध्वम् । प्रथमा द्वितीयेषु द्विती-
यास्तृतीयेषु त्रिरेकादशास्त्रयस्त्रिंशदऽनुवञ्चारभेस्वाहा ।
इदं शकेयं यदिदं करोमिस्वाहा ॥ ते माऽवत्त ते माजि-
न्वताऽस्मिन्ब्रह्मण्यऽस्मिन्क्षेत्रेऽस्यामाशिष्यस्यां पुरोधा-
यामऽस्यांदेवहूत्यांस्वाहा । ऋताषाडिंतिद्वादशभिमन्त्रैः
ससोभुवनस्येतिस्वाहान्तेन त्रयोदशेन होमः (राष्ट्रभृतो रा-
ष्ट्रभृतामौपानिषदानामृषीणाम ) ऋताषाडृतधामाऽग्नि-
र्गन्धर्वः सनइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहावट् । तस्यौ-
षधयोऽप्सरसो मुदा नामताभ्यः स्वाहावट् । सुषुम्णः
सूर्यरश्मिश्चन्द्रमा गन्धर्वः सन इदं ब्रह्मक्षत्रं पातुतस्मै स्वाहा-
वट् । तस्यनक्षत्राण्यप्सरसो भेकुरयोनामताभ्यः स्वाहा-
वट् । संहितो विश्वसामा सूर्योगन्धर्वः– ॥ तस्य मरीच-
योऽप्सरस आयुवोनाम– ॥ भुज्युः सुपर्णो यज्ञो ग-
न्धर्वः– । तस्य दक्षिणाअप्सरसस्तवानाम– । प्रजाप-



तिर्विश्वकर्मा मनो गन्धर्वः– । तस्य ऋक्सामान्यऽ-
प्सरस इष्टयोनाम– । इषिरो विश्वव्यचा वातो गन्धर्वः ॥
तस्यापोऽप्सरस ऊर्जोनामताभ्यः स्वाहावट् । स नो
भुवनस्य पते यस्य त उपरिगृहा त्रिराद्ध पतेअस्मै ब्र-
ह्मणेऽस्मैक्षत्राय महि शर्म यच्छस्वाहा ॥ ३ ॥ तजोऽ-
स्मि ( वार्त्रघ्नावाज्यभागौ ब्रह्मणः ) अग्निर्वृत्राणि जङ्घनद्-
द्रविणस्युर्विपण्यया । समिद्धः शुक्र आहुतःस्वाहा ॥
( दक्षिणार्धेन सोमं सोमेन पितृलोकम् ) त्वं सोमासि
सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असिक्रतुः स्वाहा ॥
( ततः स्विष्टकृदाज्यभागान्तरेण यस्य निर्वपणं तस्य प्र-
धानम् ) । यहां इष्टयाग के प्रधानमन्त्र देना यह निय-
म है । जैसा कि इस पर्वतन्त्र पर यह प्रधान हैं ॥ ( पृ ४ )
तेजोसि ॥ प्रधानं (पौर्णमास्यां) ध्रुवोयज्ञस्य–इति स्थाली-
पाकस्य ॥ आन्यन्दिवो मातरिश्वा इत्याज्यस्य ॥ यु-

वमेतानि दिवि रोचनानि इति चरोः । प्रतद्विष्णु : इत्याज्येन ॥ अथामावस्यां ॥ भुवो यज्ञस्य ॥ उभावामिन्द्राग्नी आहुवध्या– इति द्वाभ्यां चरोः ॥ येकेचज्मा इत्याज्येन ॥ ( प्रधानोऽनन्तरमृतुतिथिनक्षत्रदेवताश्चयजेत ) । (प्रधान आद्य सब होम के पीछे अगला काम यह करना )

ओंअग्नयेस्वाहा, वसन्ताय । इन्द्राय, ग्रीष्माय । मरुद्भ्यः, वर्षाभ्यः । विश्वेभ्योदेवेभ्यः, शरदे । मित्राय, हेमन्ताय । मित्रावरुणाभ्यां, हेमन्तशिशिराभ्यांस्वाहा ॥ ओंब्रह्मणेस्वाहा, प्रतिपदे । त्वाष्ट्रे, द्वितीयायै । जनार्दनाय, तृतीयायै । यमाय, चतुर्थ्यै । सोमाय, पञ्चम्यै । कुमाराय, षष्ठ्यै । मुनिभ्यः, सप्तम्यै । वसुभ्यः, अष्टम्यै । पिशाचेभ्यः, नवम्यै । धर्माय, दशम्यै । रुद्रेभ्यः, एकादश्यै । रविभ्यः, द्वादश्यै । कामाय, त्रयोदश्यै । भूतेभ्यः, चतुर्दश्यै । पितृभ्यः, अ-



मावस्यां । विश्वेभ्योदेवेभ्यः, पूर्णपञ्चदश्यैस्वाहा ॥ ॐअग्नयेस्वाहा, कृत्तिकाभ्यः । प्रजापतये, रोहिण्यै । मरुद्भ्यः, इन्वकाभ्यः । रुद्राय, बाहवे । अदितये, पुनर्वसवे । बृहस्पतये, तिष्याय । सर्पेभ्यः, अश्लेषाभ्यः पितृभ्यः, मघायै । भगाय, पूर्वाभ्यःफल्गुनीभ्यः । अर्यम्णे, उत्तराभ्यःफल्गुनीभ्यः । सवित्रे, हस्ताय । त्वष्ट्रे, चित्राय । वायवे, निष्ठायै । इन्द्राग्निभ्यां, विशाखायै । मित्राय, अनूराधाभ्यः । इन्द्राय, ज्येष्ठायै । निर्ऋतये, मूलाय । अद्भ्यः, पूर्वाभ्यआषाढाभ्यः विश्वेभ्योदेवेभ्यः, उत्तराभ्यआषाढाभ्यः । ब्रह्मणे, अभिजिते । विष्णवे, अश्वत्थाय । वसुभ्यः, श्रविष्ठाभ्यः । वरुणाय, शतभिषजे । अजैकपदेभ्यः, पूर्वाभ्यःप्रोष्ठपदेभ्यः । अहिर्बुध्न्याय, उत्तराभ्यःप्रोष्ठपदेभ्यः । पूष्णे, रेवत्यै । अश्विभ्यां, अश्वयुग्भ्यां । यमाय, अपभरणीभ्यः

स्वाहा ॥ [ ततउपहोमः शिशुशैशवयोरार्षम ] इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो रायस्पोषः प्रजायतांस्वाहा ॥ अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः सुपत्या सुवीरा । इदं बर्हिरतिबर्हींष्यन्येमं यज्ञं विश्वे अवन्तु देवाःस्वाहा ॥ आनःप्रजां जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्ल्यपानो मयि पुष्टिं पुष्टिपतिर्दधातुस्वाहा ॥ ( इन्द्रस्याग्नेयमैन्द्रमन्त्रः ) अग्निमूर्धा दिवः ककुत्पतिः पृथिव्याअयम् । अपांरेतांसि जिन्वतेस्वाहा ॥ उभा वामिन्द्राग्नी आहुवध्या– ॥ अयमिह प्रथमोऽधायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशेस्वाहा ॥ अयन्ते योनिर्ऋत्वियो यतोजातो अरोचथाः । तज्जानन्नऽग्न आरोह ततो नो वर्धया रयिंस्वाहा ॥ [ स्तोमो देवानाम् ]



उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । अरे अस्मे च शृण्वतेस्वाहा ॥ अस्य प्रत्नामनुद्युतं शुक्रं दुदुह्रे अह्रयः । पयःसहस्रसामृषिंस्व हा ॥ [ अरुणेः ] कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नुत्ते दानन्देवस्य पृच्यतेस्वाहा ॥ परिते दूळभोरथो अस्मां अश्नोतु विश्वतः । येन रक्षसिदाशुषःस्वाहा ॥ [ प्राक्स्वष्टकृतो देवतायै बलिमुपहरेत ] सावित्राणि–अग्नये अग्नीषोमाभ्यामितिपौर्णमास्यां अग्नये इन्द्राग्निभ्यामित्यमावास्यां पर्वतत्रयागदेवताभ्यः ऊँनमोनैवेद्यंनिवेदयामिनमः इळामग्नइतिविश्वामित्रस्य ॥ इळामग्ने पुरुदंसं सनिंगोः शश्वत्तमां हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने साते सुमतिर्भूत्वस्मेस्वाहा ॥ (हुतंमेक्षणमनुप्रहृत्य हविरुच्छिष्टमुद्वास्य, शिशुशैशवयोरार्षम) त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेळोवयासिसीष्ठाः । यजिष्ठो व-

ह्वितमः शुशुचानो विश्वाद्वेषांसि प्रमुमुग्ध्यस्मत्स्वाहा ॥
सत्वन्नोऽअग्नेवमोभवोती नेदिष्ठो अस्या उषसोव्युष्टौ ।
अवयत्त्वणो वरुणंरराणो वीहिमृळीकं सहवीनएधिस्वाहा
अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्त्वमऽयाअसि । अ-
यासा मनसा कृतोऽयाः सन्हव्यमूहिषेऽया नो धेहि भेष-
जंस्वाहा ॥ (महाव्याहृतयः प्रजापतेः) ऊँभूर्लोकायस्वाहा
ऊँभुवोलोकाय, ऊँस्वर्लोकाय, ऊँभूर्भुवःस्वर्लोकाय-
स्वाहा ॥ त्वन्नो अग्ने ॥ सत्वन्नो अग्ने ॥ न्यूनमऽति-
रिक्ते जुहोमिस्वाहा । अतिरिक्तं न्यूनेजुहोमिस्वाहा । स-
मंसमेजुहोमिस्वाहा ॥ अनाज्ञातं यदाऽज्ञातं यद्यज्ञे क्रि-
यते मिथु । सर्वं तदग्नेकल्पय त्वं हि वेत्थ यथायथंस्वा-
हा ॥ स्विष्टिश्च दुरिष्टिश्च येयज्ञमऽभिरक्षतः । प्रयाजाऽ-
नन्या नः पान्तु यज्ञमन्याभिरक्षतुस्वाहा ॥ आश्रावितम-
ऽत्याश्रावितं वषट्कृतमऽवषट्कृतमम् अननूक्तमऽत्यननू-



क्तं च यज्ञेऽतिरिक्तं कर्मणो यश्चहीनमऽग्निष्टानि प्रवेदन्नेतु
कल्पयन्स्वाहा ॥ मनोज्योतिरिति सप्त प्रायश्चितानि ॥ म-
नोज्योतिर्जुषतामाऽज्यस्यारिष्टं यज्ञं समिमन्तनोतु । इमं
यज्ञं सप्ततन्तुं तन्न आदेवायन्तु सुमनस्यमानाःस्वाहा ॥
त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये द-
दन्ति । तेषां च्छिद्रं प्रतिदध्मो यदऽत्रस्वाहाऽयं यज्ञो
अप्येतु देवान्स्वाहा ॥ यन्मे मनसश्छिद्रं यद्वाचो यच्च
मे हृदः । अयं देवोबृहस्पतिः संततिसश्चतु राधसास्वाहा
विश्वकर्मा हविरिदं जुषाणः सन्तानैर्यज्ञं समिमन्तनोति ।
या व्युष्टा उषसो याश्च निम्रुचस्ताः सन्ददातु हविषा घृ-
तेनस्वाहा ॥ अयाश्चाग्नेस्य– । त्वन्नोअग्ने– । सत्व-
न्नोअग्ने– ॥ आज्यशेषं स्रुच्याऽसिच्य, दर्भानऽग्नौ प्रास्य
वेद्यामूर्ध्वं तिष्ठन्यजुर्जुहुयात् । आदौ ब्रह्मणपूजनम ॥ ऊँ-
गायत्र्यैनमः ऊँभूर्भुवःस्वः ३ अद्यतावत्–अग्नेर्यविष्टस्य

सानुचरस्य आदित्यस्य अध्वर्योः ब्रह्मविष्णुमहेश्वरदेवतानां आत्मनो–अमुककर्मनिमित्तं अग्नियविष्ठब्राह्मणपूजनमर्चामऽहंकरिष्ये । पवित्रंनिवार्य । अग्नयेयविष्ठाय समालभनं गन्धोनमः (पवित्रंधृत्वा) अर्घादिदक्षिणान्तं कृत्वाऽच्छिद्रं पूर्ववत् । एताभ्योदेवताभ्यो यवोदकंनमः उदकतर्पणंनमः तेजोसि । आश्रावितमिति पूर्णांदत्वाऽशिषोग्राह्याः ॥ देवागातुश्रोत्रिया, देवागातुविदो गातुंवित्त्वा गातुमित मनसस्पत इमं देवयज्ञंस्वाहाऽवाचेस्वाहा वातेधाः ॥ घृततर्पणमऽग्नौ ॥ सप्तते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्तधाम प्रियाणि । सप्तहोत्रा अनुविद्वान्सप्तयोनीरापृणस्व घृतेन । पुनस्त्वाऽदित्या रुद्रावसवः समिन्धतां पुनर्ब्रह्मणोऽव सुनीथयज्ञैः । घृतेन ते तनुंवर्धयामि सत्याः सन्तु यजमानस्यकामाः ॥ तर्पणं सर्वेभ्यः कामेभ्यो ब्राह्मणो यद्धं किञ्चविन्दते तद्वस्व-



तद्वस्वाग्निर्देवानां वसुमांस्तमेव भागधेयेनोपधावति सोऽस्मै सर्वान्कामान्प्रयच्छति ॥ मानस्तोके इति भस्मनाललाटमनुलिप्य ॥ मानस्तोके तनये मान आयौ मानो गोषु मानो अश्वेषु रीरिषः । वीरान्मानो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेमते ॥ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं, यद्देवानां त्र्यायुषं तत्ते(मे)ऽस्तु त्र्यायुषम् ॥ ऋतंत्वासत्येनाग्निं विमुञ्चामि ३ । यज्ञस्य सन्ततिरसि यज्ञस्य त्वा सन्तत्यैनयामि ॥ पुनः परिसमूह्य, पर्युक्ष्य, परिषिच्य । चातुष्कोष्ठैः स्तरैः ' पुरस्तात् , परिस्तीर्य ॥ अग्नयेस्वाहा, प्रजापतयेस्वाहा, इतिसायमाहुतिद्वयं, सूर्यायस्वाहा, प्रजापतयेस्वाहा । ' इति प्रातराहुतिद्वयं प्रतिपदि चतुस्रआहुतीर्जुहुयात् । एवं । द्वितीयस्यां (अग्नयेस्वाहा प्रजापतयेस्वाहा सूर्यायस्वाहा प्रजापतयेस्वाहा ॥ तृतीस्यां, अ, प्र, सू, प्र । च-

तुर्थ्यां अ, प्र, सू, प्र । पञ्चम्यां अ, प्र. सू,प्र । षष्ठ्यां अ, प्र, सू; प्र । सप्तम्यां अ प्र, सू, प्र । अष्टम्यां अ, प्र, सू, प्र । नवम्यां अ, प्र, सू, प्र । दशम्यां अ, प्र, सू, प्र । एकादश्यां अ, प्र, सू; प्र । द्वादश्यां अ, प्र, सू, प्र । त्रयोदश्यां अ, प्र, सू, प्र । चतुर्दश्यां अ, प्र, सू, प्र । पूर्णपञ्चदश्यां वा अमावस्यां अग्नयेस्वाहा प्रजापतये-स्वाहा इति सायन्तनऽमाहुतिद्वयमेव । ततोग्निं विमुच्य ३ नयामि ॥ पुनः परिसमूह्य पर्युक्ष्य ६ ॥ अचेत्याग्नि-श्चिकितिर्हव्यवाट्समुद्रथः । अग्निःशुक्रेण शोचिषाबृह-त्सूर्यो अरोचत । भन्गृद्भ्रएयपद्विषो दहत्रचांसि दाशुषः । अग्निर्विश्वस्य राजत अग्निर्विश्वं विराजते । अग्निः सर्वविराजते ॥ ॐभगवन्पुण्डरीकाक्ष भक्तानुग्रहकारक । अस्मद्दयानुरोधेन सन्निधानं कुरुप्रभो ॥ तेजोसीत्यग्ने तेजो मयि धेहि ॥ इति श्रीपञ्चयागाऽपरपर्यायपर्वतन्त्रविधिः॥



## अथ जपादावऽनुष्ठानविधिः ॥

प्रथमदिने शुद्धवस्त्रादिमान् । ब्रह्मकलशमश्मचूर्णेनोल्लिख्य क्षेत्रेशद्वयं च । अभिनोदेवी-वषट्ते तावत् प्रधानानि । तान्त्रिके वैदिके मिश्रकर्मणि वा तादृशानि मन्त्राणि दत्त्वा । ऐन्द्राग्नं । पूजायामऽवाहनेषु, प्रधानदेवानां गायत्रींश्च पठित्वा । यथाक्रममावाहनानि । द्वार्देव- कलशदेवानामा-ऽऽवाहनमनु । आवाहयाम्यहंदेवं विघ्नभक्ष्यं गणेश्व-रम् । वल्लभाङ्कितवामाङ्गं मूषकासनसंस्थितम् १ रक्त-वर्णो महातेजा रक्तस्रग्धामभूषितः । बलिःपुष्पंचरु-श्चैव धूपोयं प्रतिगृह्यताम् २ मूलमन्त्रं ॥ ॐआवाहया-मि गायत्रीं सर्वशक्तिस्वरूपिणीम् । छन्दसांमातरं नि-त्यामऽचिन्त्यमहिमोज्ज्वलाम् ॥ चित्ररूपधरांशुद्धां चित्र-स्रग्धा-२ मूलं ॥ आवाहयाम्यहं देवं मृत्युञ्जयमति-शुभम् । पद्मद्वयासनं नागभूषणं चन्द्रशेखरम् १ शु-

क्लवर्णो–२ मूलं ॥ आवाहयाम्यहं विष्णुं दैत्यघ्नं वि-
श्वरूपिणम् । अतसीपुष्पसंकाशं पीतवस्त्रं रमाधवम् १
कृष्णवर्णो–२ मूलं ॥ आवाहयाम्यहं देवं वासुदेवं ज-
गत्पतिम् । गोपगोगोपिकाव्याप्तं वृन्दावनस्थितिप्रि-
यम् १ कृष्णवर्णो–२ ॐनमोभगवतेवासुदेवाय । आ-
वाहयाम्यहं लक्ष्मीं विष्णुवक्षःस्थलोज्ज्वलाम् । ब्रह्मा-
द्यऽगम्यां पद्मस्थां भक्ताभयवरप्रदाम् १ रक्तवर्णा– २
मूलं ॥ आवाहयाम्यहं राज्ञीं द्वादशार्कसमप्रभाम् । सिं-
हस्थां द्विभुजां स्वेष्टप्रदामुरगमण्डिताम् १ श्वेतवर्णा– २
मूलं ॥ आवाहयाम्यहं देवं भूतेश्वरं दिगम्बरम् । चन्द्रचूडं
नागसूत्रं भूतिश्वेतं जगत्प्रभुम् । शुक्लवर्णो–२ मूलं ॥ आ-
वाहयाम्यहंज्वालांज्वालाडम्बरभूषिताम् । भक्ताभीष्टरतां
नित्यां भैरवाकारधारिणीम् १ श्वेतवर्णा– २ मूलं ॥
आवाहयाम्यहं देवं महादेवं शवासनम् । कल्पान्तसू-



र्यसङ्काशं चिदीशं शूलधारिणम् १ शुक्लवर्णो–२ मूलं ॥
आवाहयाम्यहं देवीं शारिकां सिंहवाहनाम् । अष्टाद-
शभुजां चन्द्रचूडामष्टकसंयुताम् १ रक्तवर्णा–२ मूलं ॥
आवाहयाम्यहं देवं वामदेवं चतुर्भुजम् । कपालासिग-
दाखड्गधारिणं भस्मभूषितम् १ श्वेतवर्णो–२ मूलं ॥
आवाहयाम्यहं देवमीश्वरं पञ्चवक्त्रकम् । वृषभस्थं स-
र्पभूषं देव्या वामेऽतिभूषितम् १ सितवर्णो–२ मूलं ॥
आवाहयाम्यहं देवं कुमारं द्विभुजं प्रभुम् । भुजङ्गैर्भूषि-
तं गात्रे मयूरासनसंस्थितम् १ श्वेतवर्णो– २ मूलं ॥
आवाहयाम्यहं देवं वेतालं खरकर्णकम् । उलूकास्थं
भैरवेशं भक्ताभीष्टवरप्रदम् १ शुभ्रवर्णो–२ मूलं ॥ आ-
वाहयाम्यहं देवं देवराजं गजासनम् । देवस्थले कृ-
तावासं भैरवेशं भयापहम् १ शुभ्रवर्णो–२ मूलं ॥ इत्थं-
नवग्रहाद्याऽवाहनमऽनु । आवाहयाम्यहं देवं वास्तोष्पति-

तिप्रियम् । अधोमुखं धराकाशदिक्षु सर्वत्रव्यापकम् १
स्वेच्छावर्णो–२ मूल ॥ आवाहयाम्यहं देवीं सुस्मि-
तामऽभयङ्करीम् । ऐरावणसमारूढां पाशाङ्कुशकरांप-
राम् १ नीलवर्णा–२ मूलं ॥ इति दक्षिणान्तं अक्ष-
य्यंविना ॥ सङ्कल्पङ्कुर्याद्यथा ॥ ॐतत्सद्ब्रह्माऽद्यता-
वत्–आत्मनो–अमुकदिनमारभ्य अमुकदिनंतावत् अमुक-
कामनासिद्ध्यर्थे अमुकमन्त्रजपार्थं "नानागोत्रान् ब्राह्मणान-
ऽहंवृणे" । (वा, स्वयं करिष्ये) इति सङ्कल्प्य, निमन्त्रित-
ब्राह्मणान्कृतासनशोधनादीन् गणपति मालां च पञ्चोपचार
पूजया वृणुयात ॥ तत्राऽदौनमस्कारो यथा । बृहस्पते
अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु । यदीदयच्छ-
वसर्तप्रजात तदस्मासु द्रविणं देहिचित्रमितिनमस्कृत्य ।
विनायकाय ८ ॐह्रींश्रींअक्षमालाभगवत्यै । अर्चितदेव-
तारूपाय ब्राह्मणाय समालभनं गन्धार्घपुष्पदीपधूपादि



दक्षिणानैवेद्यान्तं कङ्कणबन्धनं च कृत्वा । अक्षय्यं ।
कलशेपुष्पद्वयं ॥ हवनदिने तु सङ्कल्पोयथा । अद्यतावत्
आत्मनो–अमुकदेवस्य इयन्मितानिष्पन्नजपीयदशांशहोम
तद्दशांशतर्पणतद्दशांशमार्जनतद्दशांशब्राह्मणभोजनार्थं "नाना
गोत्रान्ब्राह्मणानहंवृणे" (वा, स्वयं करिष्ये) ॥ कर्तव्यतावि-
धिर्यथा ॥ हवने, ॐग्लूंगंगणपतयेस्वाहा । तर्पणे ॐग्लूं-
गंगणपतयेनमः गणपतितर्पयामिस्वाहा ॥ मार्जने ॐ
ग्लूंगंगणपतयेनमः गणपतिमार्जयामिनमः । भोजने ।
ॐग्लूंगंगणपतयेनमःगणपतिं भोजयामिनमः । इत्थं सर्वम-
न्त्रेषु नियमः ॥ प्रभात से किई हुई स्नान और सन्ध्योपासन
आदि नित्यकर्म बाले ब्राह्मणादिकों की आसनशोधन की
विधि । जैसा ॥ अस्यश्रीआसनशोधनमन्त्रस्य मेरुपृष्ठऋ-
षिः, सुतलंच्छन्दः कूर्मोदेवता आसनशोधने विनियोगः ।
पृथिव्यै गन्धादि । शुक्लाम्बरधरं । तीर्थेस्नेयं–यत्रास्ति

माता-अद्यतावत्-विनायकाय ८ ॐह्रींश्रींअक्षमालाभगवत्यै । अर्चितदेवताभ्यः दीपधूपः ॥ संव्वःसृजामि ३ अश्विनोः प्राणस्तौ० । गणानान्त्वा गणपतिं-विनायकाय ८ चतुर्दशस्नानानिनमः । जातवेदसे-अक्षमालाभगवत्यै अष्टौस्नानानिनमः । ॐनमोदेवेभ्यः । आसनायनमः मूषकासनायनमः, सिंहासनायनमः । रथेअक्षेषु अनुलेपनं । [ अतऊर्ध्वं यजमानहस्तेन] विनायकाय ८ ॐह्रींश्रींअक्षमालाभगवत्यै । अर्चितदेवतारूपायब्राह्मणाय गन्धादि नैवेद्यान्तं कृत्वा॥ समाहितचित्तो मध्याह्नं यावन्नियमितदेवानां नियमितजपं समाप्य वैश्वदेवादिनित्यकर्म च समाप्य नियमितदिवसानि हविष्यान्नं भुञ्जीत ॥ ऐसा पुरश्चरणआदि अनुष्ठानों पर भी इतिकर्तव्यता विधि है ॥ किसीआपदाके न होनेपर प्रथमदिन से नियत जपादिकर्म करना । याने प्रथम दिन में जितना



करेंगे उतना ही प्रतिदिन करना । क्योंकि प्रतिदिन अनियत याने किसी दिन कम किसी दिन अधिक जपादि करना यथावत्फल न देता इत्यलं ॥ इति जपादावऽनुष्ठानविधिः ॥ अथाऽऽसनविचारः । शिलाऽसने भवन्मृत्युः पुत्रनाशं तु काष्टके । अजाऽसने महापापं पृथिव्यां निष्फलं भवेत् ॥ तृणासने महाव्याधिः पीडा वस्त्रासने भवेत् । मृगाजिने तु मुक्तिःस्यात्तत्फलं व्याघ्रचर्मणा ॥ वस्त्रासनं तु केवलं निषिद्धं चैलाऽजिनयुतं तु विदितं शुभम् ॥ उक्तं च ॥ तूलकम्बलवस्त्राणि पट्टव्याघ्रमृगाऽजिनम् । कल्पयेदाऽसनं धीमान्सौभाग्यज्ञानसिद्धिदम् ॥ वस्त्रासनं रोगहरं चैलाजिनकुशोत्तरम् । काम्यार्थं कम्बलं चैव श्रेष्ठं च रक्तकम्बलम् ॥ कृष्णाऽजिने काम्यसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि । कुशासने मन्त्रसिद्धिर्नात्रकार्या विचारणा ॥ स्यादाभिचा-

रिकंनीले रक्त वध्यादिकं भवेत् । धवले शान्तिकं मोक्षं सर्वार्थं चित्रकम्बले ॥ सर्वाभावेत्वाऽसनार्थं कुशविष्टरमिष्यते ॥ गुरुतोमन्त्रग्रहणम् ॥ यः प्रसन्नः क्षणार्धेन मोक्षलक्ष्मीं प्रयच्छति । दुर्लभं तं विजानीयाद्गुरुं संसारतारकम् ॥ यथा दीपानलः काष्ठंशुष्कमार्द्रं च निर्दहेत् । तथा गुरुकटाक्षस्तु शिष्यपापं दहेत्क्षणात् ॥ अथाक्षमालासंख्या ॥ रुद्राणां शतमेकं तु भैरवाष्टकयोजितम् । कृत्वा मेरुं महारुद्रं मालाचाष्टोत्तरं शतम् ॥१०८॥ चतुर्विंशतितत्त्वाश्च नाड्या द्वासप्ततिस्तथा । द्वादशाङ्गुलमुच्छ्वासो माला चाऽष्टोत्तरं शतम् २॥ षड्नवत्याङ्गुलायामं स्वदेहं द्वादशाङ्गुलः । बहिःप्राणो याति चैवं माला चाऽष्टोत्तरं शतम् ३ ॥ नवान्ता वर्णिता संख्याकालोयं द्वादशावधि । हत्वापरस्परं चैवं माला चाष्टोत्तरं शतम् ४ ॥ अथकरमाला ।



अनामिद्वितीयात्पर्वात्कनिष्ठादिक्रमेण तु । तर्जनीमूलपर्यन्तं दशांशं पर्वसु जपेत् ॥ अथमन्त्रसिद्धिविधिः ॥ न्यासं विना भवेन्मूकः सुप्तःस्यादासनं विना । शिरोहीनो मृतःप्रोक्तोनग्नस्तु पल्लवं विना ॥ वीर्यहीनोऽनधिकारे वृथामन्त्रोगुरुं विना । हतो दुष्टाय यो दत्तस्तदर्थं दुष्टवर्जितम् ॥ ऋषिदैवतच्छन्दोभिः परित्यक्तो भुजङ्गमः । अन्तरं यस्यबीजनव्याप्तं कीलितमुच्यते ॥ यस्य जप्यं शृणोत्यन्यःसमन्त्रः शून्य उच्यते । यत्नात्तु वर्जयेन्मन्त्री यद्येतत्सिद्धिमिच्छति ॥ मन्त्राणां पल्लवोन्यासो मन्त्राणां प्रणवः शिरः । शिरःपल्लवसंयुक्तो मन्त्रःकामदुघो मतः ॥ स्वाहाकारो वषट्कारो वश्च वट्च वौषट्तथा । नमःषडितिपल्लवः [ अथजपनियमाः ] मनःसंयमनं शौचं मौनं मन्त्रार्थचिन्तनम् । अव्यग्रत्वमऽनिर्वेदो जपसम्पत्तिहेतवः ।१। व्यग्रचित्तेन यज्जप्तं

यज्जप्तं मेरुलङ्घने । असङ्ख्यातं तु यज्जप्तं तत्सर्वं
निष्फलं भवेत् ॥२॥ अक्षमालां समाधाय यदैव ग-
णयेज्जपम् । न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रदर्श-
येत् ॥३॥ पिण्डीकृत्येन्द्रियग्रामं मन्त्रार्थे निश्चलं मनः ।
मुखवर्णपदैर्वाक्यं शुद्धमावर्तयेज्जपे ॥४॥ स्वयं न शृ-
णुयाद्यं तु तमुपांशुं विदुर्बुधाः । नीचैर्जपं बुधः कु-
र्यात्सावित्र्यास्तु विशेषतः ॥ ध्यायन्नेव मनसा मन्त्रं जि-
ह्वाग्रं नैव चालयेत् ॥५॥ अशुचिर्वाशुचिर्वाऽपि गच्छं-
स्तिष्ठन्स्वपन्नपि । मन्त्रैकशरणो विद्वान्मनसैव सदा-
ऽभ्यसेत् ।६। न दोषं मानसे जपे सर्ववेदेषु सर्वदा ।
जपनिष्ठो द्विजश्रेष्ठोऽखिलकर्मफलं लभेत् ७। अथ मन्त्र-
सिद्धिः ॥ वर्णलक्षं जपेन्मन्त्री पुरश्चरणसिद्धये । तदर्धं वा
चतुर्थांशं कलौ लक्षत्रयं जपेत् १ । लक्षन्यूनं न कर्तव्यं
चेत्याज्ञा पारमेश्वरी । जीवहीनो यथादेहः सर्वकर्मसु



न क्षमः २। पुरश्चरणहीनोपि न मन्त्रः फलदायकः ।
जिह्वादग्धा परान्नेन हस्तौ दग्धौ प्रतिग्रहात् ३। मनं-
दग्धंपरस्त्रीभिः कथं सिद्धिर्वरानने । आलस्यं जृम्भनं
निद्राक्षुतं निष्ठीवनं भयम् ८। नीचाङ्गस्पर्शनं कोपं ज-
पकाले विवर्जयेत् । (हवन पर मुद्रानियम) शान्तिके
तु मृगी ज्ञेया हंसी पौष्टिककर्मणि । अभिचारादिहोमेषु
सूकरी कथिता बुधैः ।१। सूकरी करसङ्कोची हंसी मु-
क्तकनिष्ठिका । कनिष्ठतर्जनीमुक्ता मृगीमुद्रा प्रकीर्तिता २।
हुतं यन्मुद्रया हीनं तत्सर्वं निष्फलं भवेत ॥३॥
(मालासंस्कार) अश्वत्थपत्रनवकैः पद्माकारं तु कारयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकामूलमुच्चरन् ।१। क्षालये-
त्पञ्चगव्येन सद्योजातेन सज्जलैः । चन्दनागुरुगन्धा-
द्यैर्वामदेवेन घर्षयेत् ।२। धूपयेत्तामघोरेण लेपयेत्पुरु-
षेण तु । मन्त्रयेत्पञ्चमेनैव तथेशानेन जापकः । ३ ।

प्रक्षाल्य पञ्चगव्येन तथा पञ्चामृतेन च । संस्नाप्य पञ्चगव्येन शिवकुम्भस्थितेन च ॥४॥ येन प्रतिष्ठिता माला तमेवतु मनुं जपेत् । (सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवेभवे नाभिभवे भजस्व मां भवोद्भव ) इति सद्योजातमन्त्रे सजलपञ्चगव्येनाऽभिमन्त्र्य कलशेपुनःसंस्थाप्य । ॐवामादेवायनमः, ज्येष्ठाय, रुद्राय, कालाय, कलविकरणाय, बलविकरणाय, बलप्रमथनाय, सर्वभूतदमनाय, ॐमनोन्मनायनमः इतिवामदेवेनचन्दनाद्यैः संघृष्य ॥ अथाऽघोरेण अघोरेभ्योऽथ इतिधूपयित्वा) ॐतत्पुरुषायवि–महादेवायधी–तन्नोरुद्रः प्र ३ इतितत्पुरुषेण गन्धयित्वाऽथ ॥ ॐईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवोऽस्तु सदाशिवओं इतीशानेनमालां जपित्वाऽथस्वेष्टदेवमालांजपेत् मालायाःप्राणप्रतिष्ठा ॥ॐआंह्रींक्रींयंरंलंवंशंषंसंहंहंसःसोऽहं



अक्षमालायाः प्राणा इह स्थिताः । एवं १ँ६ अक्षमालाया जीवः सर्वेन्द्रियाणि इह चिरंतिष्ठन्तुतिष्ठतु । ॐह्रींअंनमः, ॐह्रींआंनमः, ॐह्रींइंनमः, ॐह्रींईंनमः, (एवं) २ँउंनम, २ँ ऊंनमः, ऋं. ॠं. लृं, ॡं. एं, ऐं, ॐह्रींओंनमः, औं, अं, अंः, कं, खं, गं, घं, ङं, चं, छं, जं, झं, ञं, टं, ठं, डं, ढं, णं, तं, थं, दं, धं, नं, पं, फं, बं, भं, मं, यं, रं, लं, वं, शं, षं, सं, हं, क्षं, ॐह्रींमातृकायैनमः । एवं मातृकाः सम्पूज्य । संस्कृत्वैवं सुधीर्मालां पूजयेद्द्विजसत्तमः । मन्त्रयेत्पञ्चमेनैव प्रत्येकं तु शतंशतम् । मूलमन्त्रं जपेत्पश्चाद्दण्डवत्प्रणमेद्बुधः । नैवेद्यं निवेद्य । एवं या संस्कृता माला जपे कर्मणि सर्वदा । अभीष्टफलदाऽत्यर्थं मासेत्वघविनाशिनी । अदीक्षितो द्विजो वापि स्पृष्टश्चेच्छुचिमाचरेत् । न धारयेत्करे मूर्ध्नि कण्ठे च जपमालिकाम् । जपकाले जपं कृत्वा सदा शुद्धस्थले क्षिपेत् ॥ इति ॥

(नुट) जपविषय मन्त्रों को ऋषि छन्द और देवतादि के ध्यानपूर्वक पानी से सङ्कल्पकरना। फिर ऋषिसे (सिरपर) छन्दसे (मुंहपर) देवता (हृदयपर) बीज (गुह्यपर) शक्ति [पैरों पर] कीलक (नाभिस्थानपर) और विनियोग से (सर्वअङ्गों पर) न्यास करना। और (गांगींगूंगैंगौंगः) इह छः दीर्घचिह्न युक्त अपने २ बीजाक्षरों से। या छः भाग किये हुई अपने २ मन्त्रों से करन्यास व षडङ्गन्यास करके प्राणायाम व ध्यान व गायत्री का स्मरणपूर्वक प्रतिदिन नियमितसंख्याप्रमित जप बद्धासन व समाहितता से पूरा कर के माला सिर पर रखके प्राणायाम और पूर्ववन्न्यास भी करके (गुह्यातिगुह्य) इस मन्त्र से तान्त्रिकमन्त्रों का जपनिवेदनपूर्वक तर्पण करना ॥ और वैदिकमन्त्रों का आदि व अन्त पर ओंकार से सम्पुटित करके मन्त्र से जप करना और पीछले न्यास विना (देवागातु श्रोत्रिया)



इस मन्त्र से जपनिवेदन करना। यह नियम नियमित हैं ॥ प्रथम २ मन्त्रों में पूरा दिखाईंगे, और जगाहों पर जहां पूरा न लिखाया हो, वहां भी यस नियम से चलना आवश्यक है ॥ तथा प्रथम गणेश व गायत्री का जप करके फिर यथेष्टदेवों के जप पीछे अभयङ्करीका जप करना भी काश्मीर में नियमित है ॥

[तान्त्रिक] अस्यश्रीमहागणपतिमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः, महागणपतिर्देवता, गंबीजं, ग्लूंशक्तिः, नमःकीलकं, आत्मनोवाङ्मनःकायोपार्जितपापनिवारणार्थं सर्वविघ्ननिवारणार्थं अमुककामनासिद्ध्यर्थं जपे विनियोगः ॥ (ऋष्यादिन्यासः) ब्रह्माऋषयेनमःशिरसि, गायत्रंछन्दसेनमःमुखे, महागणपतिर्देवतायैनमः हृदि, गंबीजायनमःगुह्ये, ग्लूंशक्तयेनमःपादयोः, नमःकीलकायनमःनाभौ, जपेविनियोगायनमः। सर्वाङ्गेषु ॥

( अथ करन्यासः ) गांअङ्गुष्ठाभ्यांनमः, गींतर्जनीभ्यां नमः, गूंमध्यमाभ्यांनमः, गैंअनामिकाभ्यां, गौंकनिष्ठिकाभ्यांनमः. गःकरतलकरपृष्ठाभ्यांनमः ॥ (अथषडङ्गन्यासः) गां हृदयायनमः गीं शिरसेस्वाहा, गूं शिखायैवषट् गैं कवचायहुं, गौं नेत्राभ्यांवौषट्, गःअस्त्रायफट् ॥ प्राणायामः ॥ ध्यानं । बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रेशुभे वाममोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् । श्रीमान्सिंहयुगासनःश्रुतियुगे शङ्खौ वहन्मौलिमान्दिश्यादीश्वरपुत्रएष भगवांल्लम्बोदरःशर्मनः ॥ गायत्री ॥ गंतत्पुरुषायविद्महे , वक्रतुण्डायधीमहि , तन्नोदन्तीप्रचोदयात् ३ ( मालांगृह्णन् प्रार्थना ) मालेमाले महामाले सर्वशक्तिसमन्विते । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मेसिद्धिदा भव ॥ (मूलमन्त्र काजप) ॐग्लूंगंगणपतयेनमः १०८। करके त्वं माले सर्वदेवानां प्रीतिदा शुभदा तथा ।



शुभं कुरुष्व मे भद्रे यशोवीर्यं च सर्वदा इतिपठन्मालां शिरसिन्यस्य । प्राणायामः ॥ पूर्ववन्न्यासः ॥ तर्पणं । गुह्यातिगुह्यगोप्ता[स्त्रियां । गोप्त्री] त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देव ( देवि ) त्वत्प्रसादान्महेश्वर[श्वरि] ॥ अनेन मन्त्रजपेन आत्मनोवाङ्मनःकायोपार्जितपापनिवारणार्थं अमुककामनासिद्ध्यर्थेमहागणपतिःसाङ्गः सपरिवारःप्रीयतांप्रीतोऽस्तु ॥ ( आगे भी तान्त्रिक मन्त्रों की यही रीति है ) अस्यश्रीवरदगणेशमन्त्रस्य गणकऋषिः, निर्वृत्तिगायत्रीछन्दः वरदगणपतिर्देवता, गंबीजं, ह्रींशक्ति, ग्लूंकीलकं आत्मनो- त्रैलोक्यविजयसिद्ध्यर्थं जपेविनियोगः ॥ ऋष्यादिन्यासः । गांगींगूंगैंगौंगः । प्राणा । उद्यत्कोटिदिवाकरांशुसदृशं त्र्यक्षं किरीटोज्ज्वलं पात्रं मोदकपूर्णमीड्यकलशं पद्माक्षसूत्रं भुजैः । बिभ्रन्तंशुचिनागसम्भवलसत्कायं भुजङ्गोज्ज्व-

लं वन्दे सिंहयुगासनंगणपतिं त्रैलोक्यचिन्तामणिम् ॥ वा । द्विचतुर्दशवर्णभूषिताङ्गं शशिसूर्याग्निविलोचनं सुरेशम् । अहिभूषितकण्ठमक्षसूत्रं भ्रमयन्तं हृदये स्मरे गणेशम् ॥ ॐश्रींवक्रतुण्डायवि– ह्रींक्लींएकदन्तायधी– ग्लौंगंगणपतिर्नः प्र ३ ॥ ( उत्कीलनं, गंमूलंह्रीं ३ । सञ्जीवनं, मूलंगंगंगं ३ । शापहरी, ॐगंगणेशानरुद्र- शापं विमोचयनमः १० ) मूलं । ॐश्रींक्लींग्लौंगंगण- पतयेवरवरदसर्वजनंमेवशमानयस्वाहा १०८ ( सम्पुटं । ह्रींह्रींह्रींगंॐगंगंगं ३ ) मालां शिरसि । पूर्ववन्न्यासः । गुह्यातिगुह्येति-तर्पणम । [चौदाह दिनों में चौदाह सिर मा- दकों से चौदाह हजार जपहोम करने से शीघ्र सिद्धि होवे ] अस्यश्रीगणपतिवल्लभामन्त्रस्य गणकऋषिः, निर्वृद्गायत्री- च्छन्दः गणपतिवल्लभादेवता, गंबी, ह्रींश, कुरुकुरुकी, आत्मनो– जपेविनियोगः ॥ न्यासप्राणायामौ ॥ द्विभुजां



हसिताननाम्बुजामऽतिरक्ताम्बरधारिणीं शिवाम् । दधतीमभयं वरंहृदि प्रभजेऽहं गणनाथवल्लभाम् ॥ त- त्पुरु–वक्रतु–तन्नोवल्लभाप्र ३ ॥ ॐश्रींह्रींक्लींग्लौंगंगण- पतिवल्लभायैवरवरदेसर्वजनस्यहृदयं ममात्मवशंकुरुकुरु- स्वाहा १०८ मालां । गुह्यातिगुह्यगोप्त्री त्वं– अनेन । [ वैदिक ] गणानान्त्वा इति मन्त्रस्य प्रजापति र्वा रजनःकौणयऋषिः, जगतीच्छन्दः, महागणपतिर्दे, आ- त्मनो । रजनःकौणयऋषयेनमः शिरसि, जगतीच्छ- न्दसेनमः मुखे, महागणपतिर्देवतायैनमः हृदि, जपेवि- नियोगायनमः सर्वाङ्गेषु ॥ ( छःभागकृत मन्त्र से करन्या- स व षडङ्गन्यास करना । जैसा ) ॐगणानान्त्वा ग- णपतिंहवामहे [ अङ्गु । हृदि ] कविङ्कवीनां [ तर्ज । शिर उपमश्रवस्तमम् ( मध्यमा । शिखा ) ज्येष्ठराजंब्रह्मणांब्रह्म- णस्पत [ अना । कव ] आनःशृण्वन् [ कनि । नेत्रा]

ऊतिभिःसीदसादनमोम् (कर । अस्त्रा) प्राणा । विभ्रद्दक्षिण । गंतत्पुरु ३ ॥ मूलं । ॐगणानान्त्वा १०८ । मालां शिरसि, प्राणा, देवागातुश्रोत्रियाः देवागातुविदो गातुंवित्त्वा गातुमित मनसस्पत इमं देवयज्ञंस्वाहा वाचेस्वाहा वातेऽधाः ॥ अनेन मन्त्रजपेण आत्मनो अमुककामनासिद्ध्यर्थे महागणपतिः साङ्गःप्रीयतां प्रीतोऽस्तु ॥

[गायत्री] ॥ प्रणवस्य ऋषिर्ब्रह्मा गायत्रं छन्द एव च । देवोऽग्निर्व्याहृतिषु च विनियोगः प्रकीर्तितः ॥ प्रजापतेर्व्याहृतयः पूर्वस्य परमेष्टिनः । व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति ॥ व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः । व्यस्तानामऽयमग्निश्च वायुः सूर्यश्च देवताः ॥ छन्दश्च व्याहृतीनामेकाक्षराणामुक्ताख्यं द्व्यक्षराणामत्युक्ताख्यम् । विश्वामित्र ऋषिच्छन्दो गायत्रं सविता तथा ॥ देवतोपनये जप्ये गायत्र्यायोग



उच्यते । आवाहयामि गायत्रीं सर्वपापप्रणाशिनीम् ॥ न गायत्र्याः परं जप्यं न व्याहृतिसमं हुतम् । आगच्छ वरदे देवि जप्ये मे सन्निधौ भव ॥ गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता । अग्निर्वायुश्च सूर्यश्च बृहस्पत्यापएव च । इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥ एवमार्षं छन्दोदैवतं विनियोगं चानुस्मृत्य । गायत्र्या शिखामाबद्ध्य गायत्र्यैव समन्ततः ॥ आत्मनश्चापः परिक्षिप्य । ओजोसीतिगायत्रीमावाह्य देवानामार्षम् । [अपने आपको छिडककर अञ्जलि रखना]

ओजोसि सहोसि बलमसि भ्राजोसि देवानान्धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॥ (न्यास करना) ॐनाभौ, उहृदि, मशिरसि । भूःपादयोः, भुवःहृदि, स्वःशिरसि ॥ ॐभूःअङ्गुष्ठाभ्यांनमः, भुवस्तर्जनीभ्यांनमः, स्वःमध्यमाभ्यांनमः,महःअनामिकाभ्यांनमः,

जनःकनिष्ठिकाभ्यांनमः, तपःसत्यंकरतलकरपृष्ठाभ्यांनमः भूःपादयोः, भुवःजान्वोः, स्वःगुह्ये, महःनाभौ, जनः-हृदि, तपःकण्ठे, सत्यंशिरसि ॥ ॐभूःहृदयायनमः, भुवःशिरसेस्वाहा, स्वःशिखायैवषट्, महःकवचायहुं, जनःनेत्राभ्यांवौषट्, तपःसत्यंअस्त्रायफट् ॥ तत्सवितुर् अङ्गु, वरेण्यंतज, भर्गोदेवस्यमध्य, धीमहिअना, धियोयोनःकनि, प्रचोदयात्करतल ॥ तत्पादयोः, सवितुर्जान्वोः, वरेण्यंकट्यां, भर्गोनाभौ, देवस्यहृदये, धीमहिकण्ठे, धियोनासिकायां, योचक्षुषोः, नःललाटे प्रचोदयात्शिरसि ॥ तत्सवितुर्हृदया, वरेण्यंशिर, भर्गोदेवस्यशिखायै, धीमहिकवचा, धियोयोनःनेत्राभ्यां, प्रचोदयात्अस्त्राय । आपस्तनयोः, ज्योतिर्नेत्रयोः, रसो मुखे अमृतंललाटे, ब्रह्मभूर्भुवःस्वरोंशिरसि, ॥ मुद्रा ॥ तत्समायनमः, सम्पुटायनमः, विवितताय‌नमः, तुर्-



विस्तीर्णायनमः, वह्निमुखायनमः, रेत्रिमुखायनमः, ण्य-चतुर्मुखायनमः, अंपञ्चमुखायनमः, भषण्मुखायनमः, गों अधोमुखायनमः, देव्यापकाञ्जलयेनमः, वशकटायनमः, स्ययमपाशायनमः, धीग्रन्थिकायैनमः, मरुंमुखोन्मुखायनमः, हिविलम्बायनमः, धिमुष्टिकायैनमः, योमीनायनमः, योकूर्मायनमः, नःवराहायनमः, प्रसिंहाक्रान्तायनमः, चोमहाक्रान्तायनमः, दमुद्गरायनमः, यात्पल्लवायनमः ॥ प्राणा अस्यश्रीशापोद्धारमन्त्रस्य प्रजापतिर्ऋषिः विष्टरपाङ्क्तिछन्दः अग्निर्देवता शापोद्धार विनियोगः । ब्रह्मणाग्निः संविदानो रक्षोहाबाधितामितः । अमीवायुस्तेगर्भं दुर्नामा योनिमाशये १० ॥ ( इत्यृग्वेदे हिरण्यगर्भः समवर्तताग्रे भूतस्य जातःपतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मैदेवाय हविषा विधेम । १० । ( इतियजुर्वेदे ) ऊँआवायव्ययावायव्या यान्योर्वायाय-

वः ओंहरोसि पाप्मानं मेविद्धि ।१०। (इतिसामवेदे) सोहमर्कः परंज्योतिरात्मज्योतिरहंशिवः । आत्मज्योतिरहंसूर्यः सर्वज्योतिरसोम्यहम ॥ ओंसुभद्रा पावनी सुधा गायत्री विश्वभेषजम् । विशापामेनां कृत्वा यथास्तं विपरीतन ।१०८ [इत्यथर्ववेदे] ॥ तत्सवितुरितिमन्त्रस्य, विश्वामित्रऋषिः, गायत्रंच्छन्दः, सवितादेवता आत्मनो- ब्राह्मण्यदायिनीमहागायत्रीप्रीत्यर्थं जपे विनियोगः ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं कपालं गुणं शङ्खं चक्रमऽथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ आगच्छ वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि छन्दसांमातर्ब्रह्मयोने नमोस्तु ते ३ ॥ अथप्रार्थना ॥ दुर्निवारभवध्वान्तध्वंसनैककृतक्षणाम् ॥ नौमि मोहवि-



नाशाय भीतो ब्रह्मादिदैवताम् ॥ दुर्गतिं हर मे देवि बहुजन्मशतार्जिताम् । प्राप्यकल्पतरुच्छायां कथं सन्तप्यते जनैः ॥ पश्य मामाशु गायत्रि बिभ्यतं स्निग्धचक्षुषा । न बालमऽबलंपुत्रं मुञ्चत्यऽग्रगमऽम्बिका ॥ एहि मां पाणिपद्मेन देहि तूर्णंवरंशुभम् । महामोहाकुलं पुत्रं देवि मां स्पर्श नित्यशः ॥ मातःप्रतीक्षतेनार्तो यत्तदाऽशुप्रसीद मे । हित्वाऽक्षसूत्रं सावित्रि निर्विघ्नंपश्य मामिह ॥ शृण्वतोनान्यकृत्यं स्यात्तत्त्वंपरहितं कुरु । ब्रह्मविष्णुहराद्यास्त्वामाश्रयन्ति सुरेश्वरि ॥ अथशतनाम ॥ चराचरजगत्सर्गलयलीलाविधायिनीम् । वेदानां मातरं वन्दे स्तवे च शरणं गतः ॥ गायत्रीं करुणाविष्टां विशिष्टगतिदायिनीम् । ब्रह्मकल्पलतां नित्यां भोगमोक्षफलावहाम् ॥ ऐन्द्रीं वैश्वानरीं चान्द्रीं विश्वरूपां महोत्तमाम् । आद्यां ब्रह्ममयीं शान्तां स-

र्वभूतानुकम्पिनीम् ॥ नारायणहृदुद्भूतां भूतानां जननीं शिवाम् । भूतधात्रीं महाभीमां पञ्चवक्त्रां शशिप्रभाम् ॥ त्रिनेत्रां त्रिपुराराातिब्रह्महरीणोपेन्द्रवन्दिताम् । महामाहेश्वरीं वन्दे ब्रह्माणीं ब्रह्मवत्सलाम् ॥ वरदां त्रिपदां भीमां भूर्भुवःस्वर्मयीं पराम् । अमृतां शाश्वतीं सिद्धां चतुर्विंशाक्षरां वराम् ॥ वेदानां जननीं देवीमृग्यजुःसामसंस्तुताम् । चतुर्वक्त्रामष्टहस्तां पड्वक्त्रां परमेश्वरीम् ॥ सर्वकामदुघां धेनुं भवदुर्गतिहारिणीम् चराचरजगद्धात्रीं सावित्रीं भक्तिवत्सलाम् ॥ सुरासुरनुतां सर्वसुरासुरवरार्चिताम् । सुरासुरनुतां सर्वसुरासुरवरप्रदाम् ॥ बहुरूपामऽरूपां च त्रिपुरारिविचोद्भवाम् । महामायां महालक्ष्मीं महाभूतनिषेविताम् ॥ सर्वभूतहृदऽब्जस्थां सर्वगां पापनाशिनीम् । सूर्यमण्डलमध्यस्थां सूर्यकोटिसमप्रभाम् ॥ महानारायणीं सौम्यां ब्र-



ह्माण्डस्योपरिस्थिताम् । अपारघोरसंसारसागराम्बुधितारिणीम् ॥ हारिणींसर्वदुःखानां सर्वापद्विनिवारिणीम् । षड्कुक्षिं सर्वदेहस्थां वैष्णवीं विष्णुपूजिताम् ॥ सौम्यां रौद्रां तथा भीमां रक्तां पीतां सितासिताम् । मोहिनीं तोषिणीं मायां चतुर्वेदनिषेविताम् ॥ बहुवक्त्रां बहुभुजां बहुपादोदरां शुभाम् । सहस्रनयनां पुण्यां पार्वतीं पर्वतालयाम् ॥ महायोगीश्वरीं गौरीं महावागीश्वरीं-पराम् । अव्यक्तां व्यक्तरूपां च पद्मस्थां पद्मभूषिताम् ॥ नानाभरणचित्राङ्गीं चन्द्रस्थां चन्द्रभूषिताम् । सरस्वतीं विशालाक्षीं शारदां सततोदिताम् ॥ सिद्धिदां सोमसूर्याग्निनयनत्रयभास्वराम् । उमां कात्यायनीं कान्तां कान्तारभयनाशिनीम् ॥ भोगमोक्षप्रदां शान्तां वाराहीं कपिलां ध्रुवाम् । नारसिंहीं महाघोरां कालीं कलिविनाशिनीम् ॥ सपादं नामशतकं जपकाले तु यः

पठेत् । अचिरात्तस्य गायत्री सर्वसिद्धिं प्रयच्छति ॥ ब्रह्मविद्भिर्द्विजैरेतत्कीर्तनीयं प्रयत्नतः । मङ्गल्यं पुण्य- मायुष्यं धन्यं सिद्धिप्रदं शुभम् ॥ ( ओङ्कारंपूर्वमु- च्चार्य व्याहृतीस्तदनन्तरम् । गायत्रीं प्रणवं चान्ते जप एवमुदाहृतम् ) मूलं । ॐभूर्भुवःस्वस्तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियोयोनःप्रचोदयादोम् १०८॥ मालांशिरसि, प्राणायामः । देवागातुश्रोत्रिया–महागा- यत्री सावित्री सरस्वती साङ्गा प्रीयतां प्रीताऽस्तु ॥

अस्य श्रीमहागायत्रीमन्त्रस्य ब्रह्माऋषिः, त्रिष्टुप्छन्दः, वेदमातागायत्रीदेवता, ॐबीजं, श्रींशक्ति,ः भैंकीलकं। ॐसांहृसां। प्राणायामः। चतुर्भुजामर्कसहस्रकोटिभां त्रि- लोचनां हारकिरीटशोभिताम् । चतुर्मुखाङ्कोपगतां म- होज्ज्वलां वेदेश्वरीं पञ्चमुखीं नमाम्यहम् ॥ आयातु वरदा देवी ३ । ॐसौःहृसौःसौःऐंक्लींह्रींश्रींभैंग्लौंगाय-



त्रिश्रींश्रींह्रींश्रींह्रींह्रींऐंप्रींस्त्रींस्वाहा १०८ ॥ गुह्याति ॥

अस्यश्रीचतुर्मुखमन्त्रस्य सदाशिवऋषिः, गायत्रीछन्दः चतुर्मुखोदे, हांबी, हृसौश, ॐकीलकं, जपे विनियोगः। हांह्रीं । चन्द्रार्धमौलिं शशिकोटिशोभितं वेदाक्षसूत्रे च वराऽभये भुजैः । वहन्तमाद्यं मणिपीठसंस्थितं चतु- र्मुखं पञ्चमुखीश्वरं भजे ॥ चतुर्मुखायवि–कमण्डलुध- रायधी–तन्नोब्रह्माप्र ३ । ॐहांहृसौःचतुर्मुखपरमार्थ- सिद्धिंदेहिदेहिहूंस्वाहा १०८। मालांशिरसि । पूर्ववन् न्यासः । गुह्यातिगुह्येति तर्पणम् ॥

ब्रह्मादेवानामिति मन्त्रस्य प्रजापतिर्ऋषिः । गायत्रंछ- न्दः, ब्रह्मादेवता, आत्मनो–जपे विनियोगः । ऋष्या- दिन्यासः ॐब्रह्मादेवानां पदवी कवीनां ( अङ्गु । हृद ) ऋषिर्विप्राणां महिषो मृगानां [ तर्ज । शिर ] श्येनो गृद्ध्राणां ( मध्य । शिखा ) सुधितिर्वनानां [अना । कव )

सोमः पवित्र ( कीन । नेत्रा ) मत्येत्यरेभन्नों (करतल । अस्त्राय)। प्राणायामः । चन्द्रार्धमौलिं– । चतुर्मुखायवि-३ ॐब्रह्मादेवनां १०८ । मालां। प्राणायामः । देवागालितितर्पणम् ॥ अनन मन्त्रजपेण ब्रह्मा प्रीयतां ॥

अस्यश्रीद्वादशाक्षरमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः; श्रीविष्णुःपरमात्मादेवता । उों (अङ्गु । हृद ) नमो (तज । शिर ) भग [ मध्य । शिखा ] वते ( अन। । कव ) वासु [ कनि । नेत्रा ] देवाय [ करतल । अस्त्रा ] प्राणायामः । विष्णुं शारदचन्द्रकोटिसदृशं शार्ङ्गरथाङ्गगदामम्भोजं दधतं सिताब्जानिलयं कान्त्या जगत्मोहनम् । आबद्धाङ्गदहारकुण्डलमहामौलिस्फुरत्कङ्कणं श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥ वासुदेवायवि–लक्ष्मीनारायणायधी–तन्नोविष्णुः प्र ३॥ उोंनमोभगवतेवासुदेवाय १०८॥ न्यासः । गुह्यातीतितर्पणम् ॥ अनन मन्त्रजपेण भगवान् वासुदेवः प्रीयतां ।



अस्य श्रीअष्टाक्षरमन्त्रस्य प्रणवोऽन्तर्यामी ऋषिः, दिव्यागायत्रीछन्दः, श्रीविष्णुःपरमात्मादेवता, अबीजं, उशक्तिः, मकीलकं । आत्मनो प्राणायामः । शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् । लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ उोंनमो नारायणाय पुरुषाय महात्मने । विशुद्धसत्वधिष्ण्याय महाहंसायधीमहि ३ उोंनमोनारायणाय १०८ । गुह्याततितर्पणं । नारायणः प्रीतोऽस्तु

तद्विष्णोरितिमन्त्रस्य मेधातिथिर्ऋषिः, गायत्रंछन्दः, विष्णुर्देवता आत्मनो। उोंतद्विष्णोः परमंपदं (अंगु । हृद) सदा पश्यन्ति सूरयः [तर्ज । शिर ] दिवीव चक्षुराततम् [मध्य । शिखा] तद्विप्रासो विपण्यवो (अना । कव)

जागृवांसः समिन्धते (कनि । नेत्रा) विष्णोर्यत्परमं पदमों [कर । अस्त्रा] प्राणायामः । ध्येयःसदा सवितृम-ण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । कीयूरवान्कनककुण्डलवान्किरीटी हारी हिरण्मयवपु धृतशङ्खचक्रः ॥ उोंनमः कारणवामनाय गोब्राह्मण-हिताय च । जगद्धिताय कृष्णाय गोविन्दायनमोनमः ३ उोंतद्विष्णोः परमं १०८ ॥ देवागास्त्विति तर्पणम् ॥

अस्य श्रीलक्ष्मीनारायणमन्त्रस्य शिवऋ, त्रिष्टुवछन्दः श्रीलक्ष्मीनारायणोदे, श्रींबीं, ह्रींश, उोंकी, आत्मनो । उोंश्रांह्रां उोंश्रींह्रीं । प्राणायामः । पूर्णेन्दुवदनं पी-तवसनं कमलासनम् । लक्ष्म्याश्रितं चतुर्बाहुं लक्ष्मी-नारायणं भजे ॥ उोंह्रींलक्ष्मीनारायणायवि- ह्सौः-परंब्रह्मणेधी- ह्रींश्रींतन्नःपरमात्मा प्र ३ । उोंह्रींह्सौः-ह्रींश्रींलक्ष्मीनारायणायश्रींनमः १०८ ॥ गुह्यातिगुह्य-



ति तर्पणम् ॥ अनेन मन्त्रजपेन आत्मनो लक्ष्मीनारायणः

अस्यश्रीमहालक्ष्मीमन्त्रस्य च्यवनऋ, अनुष्टुप्छ, महा-लक्ष्मीर्दे, श्रींबी, ह्रींश, उोंकी । उोंश्रां, उोंश्रीं । प्राणा । रक्ताननां कजकपालकरां त्रिनेत्रां लोलां परां भगव-तीं करिराजगम्याम् । ब्रह्मेन्द्ररुद्रनमितां सुरसिद्धसेव्यां लक्ष्मीं नमामि सततं परया हि भक्त्या ॥ श्रियैवि-कमलवासिन्यैधी-तन्नोलक्ष्मीः प्र ३ ॥ उोंह्रींश्रींकम-लवासिन्यैश्रियैस्वाहा १०८ । मालां शिरसि । पूर्व-वन्न्यासः । गुह्यातिगुह्येति महालक्ष्मीः प्री० तर्पणम् ॥

अस्य श्रीवटुलक्ष्मीमन्त्रस्य च्यवनऋषिः, अनुष्टुप्छ, वटुलक्ष्मीर्दे । ह्रांह्रीं । प्राणायामः । रक्ताननां । श्रियैवि ।-३ । उोंह्रूंसर्वेषांहस्ताःममधनंदेहिदेहिह्रूंवटुलक्ष्म्यैस्वाहा १०८ । अनेन वटुलक्ष्मीः साङ्गा प्रीताऽस्तु ॥

अश्वपूर्वामितिमन्त्रस्य चिक्लेतनऋषिः, अनुष्टुप्छ,

महालक्ष्मीर्दे । ओंअश्वपूर्वां [अंगु । हृद] रथमध्यां (तर्ज । शिर) हस्तिनादप्रमोदिनीम् (मध्य । शिखा) श्रियन्देवीमुपह्वये (अना । कव) श्रीर्मादेवीर् [कनि । नेत्रा] जुषतामों [कर । अस्त्रा] प्राणायामः । मातर्नमामि कमले कमलायताक्षि श्रीविष्णुहृत्कमलवासिनि विश्वमातः । क्षीरोदजे कमलकोमलगर्भगौरि लक्ष्मीः प्रसीद सततं नमतां शरण्ये ॥ श्रियैंवि- ३ ओंअश्वपूर्वां १०८ ॥ देवागातुविति तर्पण महालक्ष्मीः प्री।

अस्य श्रीषडक्षरमन्त्रस्य वामदेवऋषिः, पङ्क्तिःछन्दः, सदाशिवोदेवता आत्मनो० ॥ ओं [अंगु । हृ] न [तर्ज । शि] मः मध्य । शिखा) शि (अना । कव) वा (कनि । नेत्रा) य [कर । अस्त्रा] प्राणायामः । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं पशुरमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तु-



तमऽमरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ तन्महेशायवि-वाग्-विशुद्धायधी-तन्नःशिवः प्र ३ । ओंनमःशिवाय १०८ पूर्ववत् न्यासादि । गुह्येतितर्पणं । अनेन आ० सदाशिवः प्री

योरुद्रोअग्नावितिमन्त्रस्य भृगवऋषयः, त्रिष्टुपछन्दः, श्रीरुद्रःपरमात्मादेवता आ । ओंयोरुद्रोअग्नौ [अंगु । हृद] यअप्सुयओषधीषु (तज । शि) योवनस्पतिषु [मध्य । शिखा] योरुद्रोविश्वाभुवनाविवेश [अना । कव] तस्मैरुद्राय [कनि । नेत्रा] नमोअस्तुदेवाओं [कर । अस्त्रा] प्राणाया । कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदारमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ तत्पुरुषायवि-महादेवायधी-तन्नोरुद्रः प्र ३ । ओंयोरुद्रोअग्नौ १०८ मालां शिरसि । देवा गातु । इतित

अस्य श्रीगुह्यकालीमन्त्रस्य महाचमसकलोहऋषिः, गा-

यत्रंछन्दः, गुह्यकालीदेवता, जुंबी, सःशक्तिः, उँकीलकं
गांकां, गींकीं । प्राणायामः । नीलाम्भोधरसन्निभां श-
शिकलाचूडालसत्कुन्तलां नानाभूषणभूषितां त्रिनयनां
श्वेताम्बरालकृताम् । कुन्तखड्गवराऽभयांश्च दधतीं प्रेता-
सनाध्यासिनीं ध्यायाम्युत्तरकालिकां भगवतीं मृत्युञ्ज-
याङ्कस्थिताम् ॥ मृत्युञ्जयायैवि खड्गहस्तायैधी तन्नोगु-
ह्यकाली प्र ३ । उँजुंसःऐंक्लींगुह्यकालिकेह्रींस्वाहा १०८
गुह्येति तर्पण ॥ अनेन आत्मनो शत्रुनाशिनी गुह्यकाली प्री

अस्य श्रीमृत्युञ्जयमन्त्रस्य महाचमसकलोहऋषिः, गा-
यत्रंछन्दः, मृत्युञ्जयभट्टारकोदे, उँबी, जुंश, सःकी ।
उँ (अंगु । हृ) जुं (तर्ज । शिर) सः [मध्य । शिखा]
उँ (अना । कव) जुं (कनि । नत्रा) सः (कर । अस्त्रा)
चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं मु-
द्रापाशसुधाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् । कोटी-



रेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं कान्त्या विश्व-
विमोहनं पशुपतिं मृत्युञ्जयं भावये ॥ तत्पुरुषायवि-
महादेवायधी–तन्नोमृत्युञ्जयः प्र ३ ॥ उँजुंसःहंसः-
मांपालयपालयसोहंसःजुंउँ १०८ ॥ न्यासः गुह्येति
तर्पणम ॥ अनेन मृत्युञ्जयभट्टारकः सानुचरः प्रीयतां ।

त्र्याम्बकमितिमन्त्रस्य वसिष्ठऋषिः, अनुष्टुपछन्दः,
मृत्युञ्जयभट्टारकोदेवता । उँत्र्यम्बकं यजामहे (अंगु ।
हृद) सुगन्धिं पुष्टिवर्धनम् [तर्ज । शि] उर्वारुक-
मिव [मध्य । शिखा] बन्धनात् [अना । कव] मृ-
त्योर्मोक्षीय [कनि । नत्रा] माऽमृतादोँ [कर । अस्त्रा]
प्राणायामः । चन्द्रार्काग्नि । तत्पुरुषाय ३ । उँत्र्य-
म्बकं यजामहे १०८ । देवागालिति तर्पणम भवो-
देवः ८ मृत्युञ्जयभट्टारकः प्रीयतां ॥

अस्यश्रीअमृतेश्वरभैरवमन्त्रस्य वामदेवऋषिः, पङ्-

क्तिःछन्दः, अमृतश्वरोदेवता, ॐबीजं, जुंश, सःकील ।
ॐ (अङ्गु। हृ) जुं (तर्ज । शि) सः (मध्य । शिखा)
ॐ (अना । कव) जुं (कनि। नेत्रा) सः (कर। अस्त्रा)
प्राणायामः । चन्द्रार्धमौलिमतिसुन्दरमादिदेवं पूर्णेन्दु-
बिम्बवदनं कमलासनस्थम् । पीयूषपात्रकलशाऽब्जव-
राऽभयाढ्यं देवं त्रिनेत्रमऽमृतेश्वरमाश्रयामि ॥ अमृते-
शायवि-व्योमदेहायधी-तन्नोरुद्रःप्रचोद ३ । ॐजुंसः
अमृतेश्वरभैरवायनमः १०८ ॥ गुह्यतिगुह्येति तर्पणम् ॥

अमृतेश्वरीमन्त्रस्य [ऋषिआदि पूर्ववत्] । पूर्णेन्दुव-
दनां चन्द्रमुकुटामऽमृतेश्वरीम् । त्रिनेत्राममृतेशाङ्कगतां
तद्रूपिणीं स्मरे ॥ ॐजुंसःअमृतलक्ष्म्यैनमः १०८॥ तर्प०

चित्रन्देवानामितिमन्त्रस्य भृगुर्ऋषिः, त्रिष्टुपछन्दः,
सूर्योदेवता, ॥ ॐचित्रन्देवानां (अङ्गु । हृ) उदगादऽ-
नीकं (तर्ज । शि) चक्षुर्मित्रस्यवरुणस्याग्नेः (मध्य ।



आप्राद्यावापृथिवीचान्तरिक्षं (अना । कव) सूर्यआत्मा
(कनि । नेत्रा) जगतस्तस्थुषश्चॐ (कर । अस्त्रा) प्रा
णायामः । चूडारत्नमरीचिरञ्जितभुवा देवेन जम्भद्विषा
यस्त्रैलोक्यमणिस्त्रिसन्ध्यममरैः साकं समभ्यर्च्यते । म-
त्तैरावणकुम्भपीठविलुठत्सिन्दूरपूरच्छविः स श्रेयांसि र-
विर्ददातु नलिनीनिर्निद्रिताकोविदः ॥ घृणिःसूर्यमा-
दित्यमर्चयन्ति तपःसत्यं मधु क्षिरन्ति । तद्ब्रह्मतदा-
पोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोम् ३ ॥ ॐ चित्रन्दे-
वाना १०८ ॥ देवागातिति । अनेनह्रांह्रींसःसूर्यः प्रीयतां

अस्यश्रीविस्फुरामन्त्रस्य हंसऋषिः, गायत्रंछन्दः,
विस्फुरादेवीदेवता, रांबीजं, ॐश, नमःकी । रांरींरूं ।
त्रिनेत्रां द्विभुजां देवीं वराऽभयकराम्बुजाम् । पद्मास-
नां हसद्वक्त्रां सूर्याङ्के विस्फुरां भजे ॥ ॐविस्फुरायैवि
अष्टाचर्यैधी-तन्नोविस्फुराप्रचोद- ३ । ॐरांविस्फुरायैन-

मः १०८ । (वा) ॐरांकिरणाख्यायैसर्वतो मोहंहनह-
नविस्फुरायैनमः १०८ ॥ अनेन सूर्यशक्तिः विस्फुराप्री०
दुर्गामन्त्रस्य महेश्वरऋषिः, अनुष्टुपछन्दः, दुर्गादे-
वता । ह्रांह्रीं । दूर्वानिभां त्रिनयनां विलसत्किरीटां
शङ्खाब्जखड्गशरखेटकशूलचापान् । सन्तर्जनीं च द-
धतीं महिषासतस्थां दुर्गां नवारकुलपीठगतां भजेऽ-
हम् ॥ ॐह्रींदुर्गायैवि- अष्टाचर्यैधी- तन्नश्चण्डी प्र ३ ।
ॐह्रींदुंदुर्गायैनमः १०८ ॥ गुह्येति तर्पणं ॥
जातवेदसे इतिमन्त्रस्य कश्यपऋषिः, त्रिष्टुपछन्दः,
दुर्गादेवता आत्मनो दुर्गतिहारिणी दुर्गादेवी प्रीत्यर्थं जपे
विनियोगः ॥ ॐजातवेदसे (अङ्गु । हृ) सुनव.मसोमं
(तर्ज । शि) अरातीयतो निदहाति वेदाः ( मध्य ।
शिखा) स नस्पर्शदतिदुर्गाणि विश्वा ( अना । कव )
नावेवसिन्धुं (कनि । नेत्रा) दुरितात्यग्निरों (कर । अ-



स्त्रायफट्) अरिशङ्खकृपाणखेटबाणान्सुधनुःशूलकतर्जनीं
दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी
श्रियेऽस्तु दुर्गा ॥ सुभगायैवि- काममालिन्यैधी- तन्नो-
दुर्गाप्रचो ३ । ॐजातवेदसे १०८ ॥ देवा गात्विति
अनेन श्रीदुर्गादेवी सपरिवारा दुर्गतिहारिणी प्रीयतां ॥
कुमारमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः, कुमारोदेवता,
ह्रांबीजं, कुमारः शक्तिः, नमः कीलकं, आत्मनो०
कुमारप्राप्त्यर्थं जपे विनियोगः ॥ कांकींकूंकैंकौंकः ६ ॥
प्राणायामः ॥ हिमाद्रिश्वेतं द्विभुजं भुजङ्गैः परीतगात्रंशि-
खिविष्टरस्थम् । नगेन्द्रकन्याप्रियपुत्रमाद्यं हृदि स्मरेऽ-
भीष्टप्रदं कुमारम् ॥ कार्तिकेयायवि- सेनाधिपतयेधी-
तन्नःकुमारः प्रचोदयात् ३ । ॐह्रांकुमारायनमः १०८
वा । ॐक्लींकांकुमारायनमः १०८ ॥ गुह्यति अनेन०
कुमारः सानुशरः प्रीयतां ।

कुमारंमाता इतिमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः, कुमारो देवता, आत्मनो० जपे विनियोगः ॥ ओंकुमारंमातायुवति (अंगु । हृदया) समुब्धं गुहाबिभर्ति (तज । शिरसे) नदहाति पित्रे (मध्य । शिखा) अनीकमस्य नमिमञ्जनासः (अना । कव) पुरा पश्यन्ति (कनि । नेत्रा) निहितमऽरतौओं (करत । अस्त्रा) प्राणायामः । घण्टां सुवर्णरचितां रुचिरां पताकां शक्तिं दधानमपि चारुशिखण्डवर्हम् । भूयात्सदर्तुवदनो भवतां विभूत्यै वद्धीस्थितिर्वयसि बालवयः कुमारः ॥ कार्तिकेयाय २ ओंकुमारं माता १०८ । प्राणायामः । देवागातुश्रोत्रिया। अनेन षण्मुखः, सेनाधिपतिः कुमारः प्रीयतां ॥

अन्नपूर्णामन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः, अन्नपूर्णादेवता, आत्मनो० भुक्तिमुक्तिसिद्ध्यर्थे जपे विनियोगः हांहीमितिन्यासः । प्राणायामः । रक्तां विचित्रवसनां



नवचन्द्रचूडामऽन्नप्रदाननिरतां स्तनभारनम्राम् । नृत्यन्तमिन्दुशकलाभरणं विलोक्य हृष्टां भजे भगवतीं भवदुःखहर्त्रीम् ॥ अन्नपूर्णायैवि—अष्टादशाचर्यैधी—तन्नोऽन्नपूर्णाप्रचो ३ । ओंह्रींश्रींक्लींभगवति माहेश्वरिअन्नपूर्णेस्वाहा १०८ । अनेन० भक्तार्तिभञ्जिनी अन्नपूर्णा प्रीयतां

आनन्देश्वरभैरवमन्त्रस्य कालाग्निरुद्र ऋषिः. अनुष्टुप्छन्दः, आनन्देश्वरोदेवता, श्रींबीजं, ह्रींशक्तिः क्लींकीलकं आत्मनो० जपेविनियोगः ॥ हांहींहूं । प्राणायामः । सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् । अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ॥ अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरिस्थितम् । वृषारूढं नीलकण्ठं सर्वाभरणभूषितम ॥ कपालखट्वाङ्गधरं घण्टाडमरुवादिनम् । पाशाङ्कुशधरं देवं गदामुसुलधारिणम् ॥ खड्गखेटकपट्टिशमुद्गरोच्छूलकुन्तलम् । विचित्रखेटकामु-

ण्डवरदाऽभयपाणिकम् ॥ लोहिताङ्गं सदेवीकं ब्रह्माच्यु-
तनमस्कृतम् । आनन्दभैरवं ध्याये भोगमोचैककार-
णम् ॥ आनन्देश्वरायवि–सुरादेव्यैधी–तन्नआनन्देश्वरः
प्रचोदयात् ३ । ऊँह्रींश्रींक्लींहसरक्षमलवयऊंआनन्दश्व-
रभैरवायवौषट्स्वाहा १०८ । गुह्याति अनेन आनन्दे-
श्वरभैरवः भोगमोचैकदानचतुरः सपरिवारः प्रीयतां ॥

अस्यश्रीमहाराज्ञीमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः,
श्रीमहाराज्ञीदेवता, ह्रींबीजं, श्रींशक्तिः, क्लींकीलकं,
आत्मनो जपेविनियोगः । ऊँह्रांरां, प्राणायामः, शीतां-
शुबालार्ककृशाणुनेत्रां चतुर्भुजामेनखगासनस्थाम् । श-
ङ्खाब्जशूलासिधरां महेशीं राज्ञीं भजेऽहं तुहिनाद्रिरू-
पाम् ॥ राज्यप्रदायैवि–पञ्चदशाक्षर्यैधी–तन्नोराज्ञीप्र ३
ऊँह्रींश्रींरांक्लींसौःभगवत्यैराज्ञ्यैह्रींस्वाहा १०८ मालांशि ।
प्राणायामः । न्यासः गुह्याति–अनेन–महाराज्ञी प्रीतास्तु॥



त्रिशद्धामइतिमन्त्रस्य सर्पराजऋषिः, गायत्रंछन्दः, म-
हाराज्ञीदेवता, आत्मनो–जपेविनियोगः । ऊँत्रिंशद्धाम
(अङ्गु । हृदि) विराजति (तर्ज । शिर) वाक्पतङ्गा (मध्य
शिखा) अशिश्रियुः (अना । कव) प्रतिवस्तु (कनि । नेत्रा)
अहर्द्धिभिरों (कर । अस्त्रा) प्राणायामः । शीतांशुबालार्क०
राज्यप्रदायैवि० ॥ ऊँत्रिंशद्धामविराजति १०८ मालां ।
प्राणा । देवागातु–अनेन–महाराज्ञी प्रीतास्तु ॥

अस्यश्रीभूतेश्वरमन्त्रस्य शिवऋषिः, गायत्रंछन्दः,
भूतेश्वरोदेवता, हूंबीजं, ह्रींशक्तिः, ऊँकीलकं, आत्म-
नो जपेविनियोगः । हांहीं । प्राणायामः ॥ कुन्देन्दुभा-
सं शशिखण्डचूडं कपालपाशाङ्कुशशूलहस्तम् । त्रिलो-
चनं भूतिसितंहसन्तं भूतेश्वरं चेतसि चिन्तयामि ॥ भू-
तेश्वरायवि- जीववर्धनायधी–तन्नोभूतेश्वरः प्रचो० ३ ।
ऊँह्रींहूंभूतेश्वरायनमः १०८ मालां प्राणा न्यासः गुह्या-

तिगुह्यगोप्ता त्वं । अनेन-भूतेश्वरः प्रीयतां ॥

अस्यश्रीज्वालामुखीमन्त्रस्य वैश्वानरऋषिः, अनुष्टुप्छन्दः, श्रीज्वालामुखीदेवता, ह्रींबीजं, श्रींशक्तिः, हूं-कीलकं, आत्मनो जपेविनियोगः । ओंह्रांश्रां । प्राणा । ज्वालापर्वतसंस्थितां । ज्वालापरीतास्यसरोरुहां तां सरोजशङ्खासिगदाधरां च । सिंहासने स्थापितपादपद्मां ज्वालामुखीं सद्धृदये स्मरामि ॥ ज्वालमुख्यैवि-अमृतवासिन्यैधी-तन्नोज्वालाप्र ३ ओंह्रींश्रींज्वालामुखिममसर्वशत्रून्भक्षयभक्षयहूंफट्स्वाहा १०८ । मालां प्राणायामः न्यासः । गुह्याति अनेन ज्वालमुखी प्रीताऽ।

अस्यश्रीमहादेवमन्त्रस्य भैरवऋषिः, अनुष्टुप्छन्दः, महादेवोदेवता, ह्रोंबीजं ह्रांशक्तिः ओंकीलकं आत्म० जपेविनियोगः । ओंह्रां । प्राणायामः । त्रिनेत्रमिन्दुधर्रकिरीटरत्नं कल्पान्तसूर्यप्रभमुग्रहासम् । वृषासनंशूल-



कपालहस्तं वन्दे महादेवमहं चिदीशम् ॥ तन्महेश्वायवि-वाग्विशुद्धायधी-तन्नोमहादेवः प्र ३ । ओंह्रांह्रौं-महादेवायनमः १०८ मालां. प्राणा. न्यासः, गुह्यातिगुह्यगोप्तात्वं अनेन महादेवः सपरिवारः प्रीतोस्तु ॥

अस्यश्रीशारिकामन्त्रस्य महादेवऋषिः, त्रिष्टुप्छन्दः श्रीशारिकाभगवतीदेवता, शांबीजं श्रींशक्तिः फ्रांकीलकं आत्मनो जपेविनियोगः । ओंह्रांश्रां । प्राणायामः बालार्ककोटिद्युतिमिन्दुचूडां वरासिचक्राऽभयबाहुमाद्याम् । सिंहाधिरूढां शिववामदेवलीलां भजे चेतसि शारिकेशीम् ॥ शारिकायैवि-सप्तार्च्यैधी-तन्नःशारी प्र ओंह्रींश्रींहूंफ्रांआंशांशारिकायैनमः १०८ मालां प्राणा न्यासः गुह्याति अनेन शारिकाभगवती प्रीयतां ॥

अस्यश्रीवामदेवमन्त्रस्य कालाग्निरुद्रऋषिः, त्रिष्टुप्छन्दः, श्रीवामदेवोदेवता, ह्रांबीजं, वांशक्तिः, वाकील-

कं आत्मनो जपेविनियोगः । वांवींवूंवैंवौंवः, प्राणायामः । पूर्णेन्दुकोटिप्रभमिन्दुचूडं कपालखट्वाङ्गगदासिहस्तम् । भस्मास्थिमालाञ्चितगात्रयष्टिं श्रीवामदेवं शिवमाश्रयामि ॥ वामदेवायवि–शक्त्यतीतायधी–तन्नोवामदेवः प्र ३ ओंहांवांवामदेवायनमः १०८ मालां, प्राणायामः न्यासः । गुह्याति अनेन वामदेवः प्रीयतां ॥

अस्यश्रीभुवनेश्वरीमन्त्रस्य शिवऋषिः, गायत्रंछन्दः, भुवनेश्वरीदेवता, ह्रांबीजं, श्रींशक्तिः, क्लींकीलकं, आत्मनो जपेविनियोगः । ह्रांह्रींह्रूंह्रैंह्रौंह्रः । प्राणायामः । उद्यदिनद्युतिमिन्दुकिराटां तुङ्गकुचां नयनत्रययुक्ताम् । स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम् भुवनेश्वर्यैवि–जगद्धात्रिण्यैधी–तन्नोभुवनेश्वरी प्रचो ३ । ओंह्रींश्रींक्लींभुवनेश्वर्यैनमः १०८ मालां प्राणायामः न्यासः। गुह्यातिगुह्यगुप्त्री त्वं० अनेन भुवनेश्वरी सपरि प्रीतास्तु ॥



अस्यश्रीशारदामन्त्रस्य भैरवऋषिः, अनुष्टुपछन्दः, शारदादेवता, क्लींबीजं, ह्रींशक्तिः, नमःकीलकं, आत्मनो जपेविनियोगः । ओंह्रांश्रां । प्राणायामः । विजयेश्वरसंयुक्तां काश्मीरवाग्विधायिनीम् । विद्यांपीठेश्वरींवन्दे शारदां बुद्धिवर्धिनीम् १ ॥ तां भवानीं भवानीतक्लेशनाशविशारदाम् । शारदां शरदम्भोदसितसिंहासनांनमः २ ॥ श्रीश्रीशैलेस्थिता या प्रहसितवदना पार्वती शूलहस्ता वह्निसूर्येन्दुनेत्रा त्रिभुवनजननी षड्भुजा सर्वशक्तिः । शाण्डलेनोपनीता जयतु भगवती भक्तिगम्याऽनुयाता सा वै सिंहासनस्था ह्यभिमतफलदा शारदा शं करोतु ॥ ३ ॥ शारदायैवि–सप्तदशाक्षर्यैधी–तन्नःसरस्वती प्र ३ ओंह्रींक्लींसौःनमोभगवत्यैशारदायैह्रींस्वाहा १०८ मालांशिर, प्राणायामः, न्यासः गुह्यातिश्रीशारदाभगवती, सरस्वतीप्रदायिनी प्रीताऽस्तु ॥

अस्यश्रीत्रिपुरसुन्दरीमन्त्रस्य दक्षिणामूर्तिऋषिः, पङ्क्तिश्छन्दः, त्रिपुरसुन्दरीदेवता, ऐंबीजं, सौंशक्तिः, क्लींकीलकं, जपेविनियोगः । श्रां । प्राणायामः । गणेशवटुकस्तुता रतिसहायकामान्विता स्मरारिवरविष्टरा कुसुमबाणबाणान्विता । अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातु नः ॥ ऐंत्रिपुरायैत्रि–क्लींकामेश्वर्यैधी–सौंःतन्नःक्लिन्नःप्र ३ श्रींह्रींक्लींऐंसौंःउोंह्रींश्रींक्ऌखल्ह्रींह्स्कल्ह्रींस्कल्ह्रींसौंःऐंक्लींह्रींश्रीं १०८ मालां प्राणायामः न्यासः गुह्यातिगुह्यगोप्त्री त्वं, त्रिपुरसुन्दरी सपरिवारा प्रीताऽस्तु ॥

अस्यश्रीभाडामन्त्रस्य शिवऋषिः, त्रिष्ठुपछन्दः; भीडादेवता, आत्मनो जपेविनियोगः ॥ ह्रांश्रां । उद्यच्छीतांशुरश्मिद्युतिचयसदृशीं फुल्लपद्मोपविष्टां वीणानागेन्द्रशङ्खायुधपरशुधरां दोर्भिरीड्यां चतुर्भिः । मुक्ताहा-



रात्तनानामणिचयहृदयां शीधुपात्रं वहन्तीं वन्देभीडां भवानीं प्रहसितवदनां साधकेष्टप्रदात्रीम् ॥ भीडाभगवत्यैवि–जगदीश्यधी तन्नोभीडाप्र ३ ॥ उोंह्रींश्रींह्स्रंऐंक्लींसौंःभीडाभगवतिहंसरूपिणिस्वाहा १०८ मालां प्राणायामः. न्यासः । गुह्याति भीडा प्रीताऽस्तु ॥

अस्यश्रीवैखरीमन्त्रस्य ब्रह्माऋषिः, त्रिष्टुपछन्दः, वैखरीदेवता, ऐंबीजं, सौःशक्ति, क्लींकीलकं, जपेवि । क्लांक्लीं । प्राणायामः । सूर्यकोटिप्रतीकाशां जपादाडिमरागिणीम् । षोडशाब्दां हसद्वक्त्रां चन्द्रमौलिं त्रिलोचनाम् ॥ मुक्तकेशीं महानर्घ्यरत्नालङ्कारमण्डिताम् । शङ्खचक्रवराभीतिसमन्वितकराम्बुजाम् ॥ शवासनां सुराराध्यां मदिराऽरुणलोचनाम् । रक्ताम्बरां देवदेवीं वैखरीं मनसा स्मरेत् ॥ उोंभूर्भुवःस्वः ३ ॥ उोंऐंक्लींसौःवागीश्वरिवाक्प्रदेवैखर्यैनमः १०८ । अनेन वैखरी प्रीताऽ

अस्यश्रीसरस्वतीमन्त्रस्य दक्षिणामूर्तिः, गायत्रंछन्दः, सरस्वतीदेवता ह्रांबीजं ऊँशक्तिः क्लींकीलकं जपेवि । ह्रांह्रीं, । प्राणायामः । वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां चन्द्रार्धाङ्कितमस्तकां निजकरैः सम्बिभ्रतीमादरात् । वीणामऽक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ प्रत्याङ्गरायैवि, वाग्देव्यैधी, तन्नःसरस्वतीप्रचोद ३ । ऊँह्रींऐंह्रींऊँसरस्यत्यैनमः १०८ मालां ॥ अनेन सरस्वती प्रीताऽस्तु ।

अस्यश्रीभद्रकालीमन्त्रस्य ब्रह्माऋषिः, अनुष्टुपछन्दः भद्रकालीदे भैंबीजं ह्रींशक्तिः क्रींकील जपेवि । क्रांक्रीं ॥ मुण्डंत्रिशस्य कर्तु । क्षुत्क्षामां कोटराक्षीमपि मलिनमुखीं मुक्तकेशीं हसन्तीं नाहंतृप्तावदन्तीं जगदिदमाखिलंग्रासमेकं करोमि । हस्ताभ्यां धारयन्तीं ज्वलदनिलाशि-



खासन्निभं पायुमुग्रदन्तैर्जप्कांफलाभैः परिहरतु भयं पातु मां भद्रकाली ॥ भैंमुद्रकाल्यैवि वह्निवासिन्यैधी तन्नोभद्रकालीप्र ३ । ऊँक्रींक्रींक्रींहूंहूंह्रींह्रींभभद्रकालिभैंह्रींह्रींहूंहूंक्रींक्रींक्रींस्वाहा १०८ मालांशि प्राणायामः न्यासः गुह्यातिगुह्यगोप्त्री त्वं, भद्रकाली प्रीताऽस्तु ॥

अस्यश्रीमहाकालीमन्त्रस्य भैरवऋषिः, उष्णिक्छन्दः, श्रीदक्षिणकालिकादेवता ह्रांबी हूंश क्रींकी ऋा० । ऊँक्रां । ऊँक्रीं । प्राणा । ब्रह्माविष्णुशिवास्थिमुण्डरशनां ताम्बूलरक्ताननां वर्षामेघनिभां त्रिशूलमुसुले पद्माऽसिपाशाङ्कुशान् । शङ्खं साहियुगंधृतां दशभुजां प्रेतासने संस्थितां देवीं दक्षिणकालिकां भगवतीं रक्ताम्बरां तां स्मरे ॥ कालिकायैवि श्मशानवासिन्यैधी तन्नोघोराप्र ३ । ऊँक्रींक्रींक्रींहूंहूंह्रींह्रींदक्षिणकालिकेक्रींक्रींक्रींहूंहूंह्रींह्रींस्वाहा १०८ प्राणा तर्पणम् ॥

शत्रुविध्वंसिनीमन्त्रस्य ज्वलत्पावकऋषिः, अनुष्टुप्छन्दः, शत्रुविध्वंसिनीदेवता आत्मनो शत्रुविध्वंसनार्थे जपेवि । ऊँह्रांक्रां प्राणा । रक्ताङ्गीं शववाहिनीं त्रिशिरसं रौद्रीं महाघोरकां धूम्राक्षीं भयनाशिनीं घननिभां नीलालकालङ्कृताम् । बिभ्रन्तीं त्रिशिखं महाभयहरं पापौघविध्वंसिनीं दीप्ताङ्गीं गिरिजां महानलनिभां ध्याये सितालङ्कृताम् ॥ ऊँरक्ताङ्गयैवि, शववाहिन्यैधी तन्नोधूम्राक्षीप्र ३ ॥ ऊँह्रींक्लींसत्यवचोतिमहामाये सर्वदुष्टनिवारिणिदलिनिनिःक्रोधमितिमहारूपेअरिस्तम्भनंकुरुकुरुक्रोंस्वाहा १०८ (अयुतं प्रजपेद्देवि सद्यःशत्रुर्विनश्यति । हवनं च ततः कुर्यात्पुरन्धरसमो युधि) ॥ मालां तर्पणम्

उच्छिष्टचण्डालिनी [सुमुखीमातङ्गीमन्त्रस्य] मातङ्गऋषिः, अनुष्टुप्छन्दः उच्छिष्टचण्डालिनीमातङ्गीदेवताः



ऐंबी ह्रींशक्तिः क्लींकी आत्मनो । ऐंक्लां, ऐंक्ली प्राणा । देवीं षोडशवार्षिकीं शवगतां माध्वीरसाघूर्णितां श्यामाङ्गीमरुणाम्बरां पृथुकुचां गुञ्जावलीशोभितां हस्ताभ्यांदधतीं कपालममलं तीक्ष्णां तथा कर्त्रिकां ध्याये मानसपङ्कजे भगवतीमुच्छिष्टचण्डालिनीम् । ऐंसुमुख्यैवि, क्लीमुच्छिष्टचण्डालिन्यैधी, ठःठःसुमुखीप्र ३ । ऐंक्लींउच्छिष्टचण्डालिनीसुमुखीदेवीमहापिशाचिनीठःठःस्वाहा १०८ । तर्पण । द्वितीयभेदं । चन्द्रार्धाङ्कितशेखरां त्रिनयनां कोटीन्दुसूर्यप्रभां नानारत्नसहस्रबद्धरशनां प्रेतासने संस्थिताम् । शङ्खतोमरपट्टिसाब्जयुगलं दोर्भिर्वहन्तीं सदा ध्यायेऽहं हृदयेमुदा भगवतीं मातङ्गिनीं हारिणीम् ॥ ऊँह्रींराजमातङ्गयैवि—प्रेतासनायैधी—तन्नोमातङ्गीप्र ३ । ऊँह्रींराजमातङ्गिनिममसर्वार्थसिद्धिंदेहिदेहिफट्स्वाहा १०८ ॥ वा । ऊँक्रींश्रींप्रींप्रींछ्रींउच्छि-

ष्टचण्डालिनीदेवि महापिशाचिनिमातङ्गीदेविक्रींठःह्रीं-ठःऐंठःस्वाहा १०८ । मालां तर्पणम् ॥

कामेश्वरमन्त्रस्य दक्षिणामूर्तिर्ऋषिः, पङ्क्तिश्छन्दः, श्रीकामेश्वरोदेवता ओंबी ह्रींश श्रींकी आत्म । ह्रांकां प्राणायामः । चन्द्रकोटिसमानाभं चन्द्रमौलिं त्रिलोचनम् । वराभयत्रिशूलासिकरं कामेश्वरं भजे ॥ चन्द्रमौलयेवि-त्रिलोचनायधी-तन्नःकामेश्वरः प्र० ३ । ओंह्रींश्रींअमुककामेश्वरभैरवायनमः १०८ । वा । ओंऐंक्लीं-सौःओंह्रींश्रींहसरक्षमलवयऊंसहक्षमलवयऊंयरलवक्षमयूं-ओंह्रींश्रींओंसौःक्लींऐंकामेश्वरभैरवायस्वाहा १०८ तर्पणं ।

शिवाभगवतीमन्त्रस्य सङ्कर्षणऋषिः, पङ्क्तिश्छन्दः, श्रीशिवादेवता आत्मनो । ओं [अङ्गु । हृद] ह्रीं (तर्ज । शिर) श्रीं (मध्य । शिखा) ओं (अना । कव) ह्रीं (कनि । नेत्रा) श्रीं [कर । अस्त्रा] प्राणा । देवींसृगालवदना-

मऽरुणां त्रिनेत्रामेकाननां वसुभुजामसिपाशहस्ताम् । रावाङ्कुशाधृतकपालसकिङ्किणीकां खट्वांगपुस्तकधरां शवगां नमामि ॥ ओंह्रींशिवाभगवत्यैवि-सृगालवदनायैधी-तन्नःशिवाप्र० ३ । ओंह्रींश्रींशिवाभगवत्यैनमः १०८ गुह्यातिगुह्येति अनेन० शिवाभगवती प्रीयतां ।

उमादुर्गादेवीमन्त्रस्य शुकदेवऋषिः, अनुष्टुप्छन्दः, श्रीउमादुर्गादेवता आत्मनो ह्रांश्रां । प्राणा । सिंहस्था शशिशेखरा मरकतप्रख्या चतुर्भिर्भुजैःशङ्खचक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिःशोभिता । आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीक्वणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥ ओंकाररूपायैवि-पञ्चदेवतायैधी-तन्नउमादुर्गाप्र ३ ओंह्रींश्रींक्लींउमादुर्गाभगवत्यैनमः १०८ प्राणा । तर्पणम् ॥

अर्धनारीश्वरमन्त्रस्य कश्यपऋषिः, अनुष्टुप्छन्दः,

अर्धनारीश्वरोदेवता आत्मनो। 'ऊँह्रां' प्राणायामः। नीलप्रवालरुचिरं विलसत्त्रिनेत्रं पाशाऽरुणोत्पलकपालकशूलहस्तम्। अर्धाम्बिकेशमनिशं भुजगोपवीतं मालेन्दुबद्धमुकुटं प्रणमामि रूपम्॥ तत्पुरुषायवि-महादेवायधी-तन्नोऽर्धनारीश्वरःप्र ३ रत्तसरयरूंअर्धनारीश्वरायनमः १०८ तर्पणम्॥

कुवेरमन्त्रस्य विश्रवाऋषिः, बृहतीछन्दः, श्रीशिवमित्रं कुवेरोदेवता आत्मनो कांकींकूं। मनुजवाह्यविमानवरस्थितं गरुडरत्ननिभं निधिनायकम्। शिवसखं मुकुटादिविभूषितं वरगदे दधतं भज तुन्दिलम्॥ यत्तिणीशायवि-गदाहस्तायधी-तन्नःकुवेरःप्र धा। ऊँयत्ताकुवेरायवैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे धेहिधापयस्वाहा १०८ अथवा। ऊँमहारुद्रऋषिः पङ्क्तिछन्दः कुवेरोदे० । ऊँह्रींश्रींक्लींस्लूंह्सौः-



शक्तिहस्तायकुवेरायनमः १०८। धनीधिपः प्रायतां

वेतालभैरवमन्त्रस्य ब्रह्माऋषिः, जगतीच्छन्दः वेतालभैरवोदेवता ऊँबी ह्रींश श्रींकी आत्मनो। ऊँह्रांश्रां प्राणायामः। ज्वालाकेशं त्रिनेत्रं भुजगपतिमहाभीषणंमुण्डमालां देवं कर्त्री कपालं डमरमथ महानीलशूलं दधानम्। वीणां वाद्यप्रवीणामुरसि विनिहितां वादयन्तं भुजाभ्यां वन्दे वेतालमुद्यद्दिनकरसदृशं नाट्यलग्नं हसन्तम्॥ उलूकाद्यायवि-खरकर्णायधी-तन्नोवेतालः प्र० ३। ऊँह्रींश्रींवेतालभैरवायनमः १८०। वा॥ पिङ्गकेशमुदिताभ्रसन्निभंसृक्किणं भुजगभीषणाननम्। मुण्डमालमभयं चतुर्भुजं तं स्मरामि हृदये शवासनम्॥ उलूकाद्यायवि ३। ऊँश्रींह्रींऐंसौह्सौंह्रींश्रींऊँवेतालभैरवसौःक्लींऐंफट्स्वाहा १०८। तर्पणं, वेतालभैरवः प्रीतो

जम्बुकश्वरमन्त्रस्य वामदेवऋषिः, त्रिष्टुपछन्दः जम्बु-

केश्वरोदेवता ह्रींबीजं श्रींशक्तिः ओंकीलकं जपेविनि। ह्रांश्रां। देवंधर्मासनस्थं प्रहसितवदनं वह्निचन्द्रार्कनेत्रं नानालङ्कारयुक्तं शशिमुकुटधरं व्यालयज्ञोपवीतम्। हस्ते शूलं कपलं सरसिजयुगलं धारयन्तं भुजाभ्यां ब्रह्माद्यैःस्तूयमानं सकलभयहरं जम्बुकेशं भजामि॥ जम्बुकेशायवि द्वादशाक्षरायधी तन्नोजम्बुकेश्वरःप्र० ३ ओंह्रींश्रींक्लींजम्बुकेश्वरायनमः १०८ तर्पणं।

सन्तानगोपालमन्त्रस्य नारदऋषिः, अनुष्टुप्छन्दः, सुतप्रदःकृष्णोदेवता आत्मनो पुत्रप्राप्त्यर्थे। कांकींकूं-कैंकौंकः। विजयेन स्वतो रथस्थितः प्रजामानीय सुसुद्रमध्यतः। प्रददत्तनयं द्विजन्मने स्मरणीयो वसुदेवनन्दनः॥ वासुदेवायवि–लक्ष्मीनारायणायधी–तन्नोविष्णुःप्र ३॥ ओंदेवकीसुत गोविन्द वासुदेव जनार्दन। देहि मे तनयं कृष्ण त्वामहं शरणंगतः १०८ गुह्याति।



अनेन० भगवान् बालगोपालः कृष्णः पुत्रप्रदो भवतु॥

रामचन्द्रमन्त्रस्य ब्रह्माऋषिः, गायत्रंछन्दः राक्षसमर्दनोरामोदेवता जपे। रांरीं। प्राणा। कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि। सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभांसस्मितां पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे॥ रामचन्द्रायवि–सीतापतयेधी–तन्नोरामःप्र ३ ओंरांरामायनमः १०८ वा। ओंहुंजानकीवल्लभायस्वाहा १०८ मालां तर्पणम्॥

मङ्गलामन्त्रस्य भैरवऋषिः, गायत्रंछन्दः मङ्गलादे०। हांहीं। प्राणायामः। शुक्लाम्बरधरां देवीं शुक्लालङ्कारभूषिताम्। सर्वमङ्गलधात्रीं तां मङ्गलां प्रणमाम्यहम्॥ श्वेताम्बरायैवि–सर्वमङ्गलायैधी–तन्नोमङ्गलाप्र ३ ह्रींमङ्गलेमङ्गलालयेस्वाहा १०८ गुह्याति, ग्रहपीडाहारिणी भ

पिङ्गलामन्त्रस्य भैरवऋषिः, त्रिष्टुपछन्दः पिङ्गलादे । स्हांस्हीं । प्राणायामः रक्तार्ची रक्तवसनां रक्तमाल्याविभूषणाम् । सूर्यकोटिसमानाभां पिङ्गलां मनसा स्मरे ॥ भानुरत्नायैवि–रक्तवासिन्यैधी–तन्नःपिङ्गलाप्र ३ ह्सौंपिङ्गलेवैरिवारिणिप्रसीदफट् १०८ पिङ्गला शत्रुघातिणी भव

धन्यामन्त्रस्य महादेवऋषिः, जगतीछन्दः, धन्यादे, जपे । ह्रांह्रीं । पीताम्बरधरां पीतां पीतस्रग्धामभूषिताम् । सुरासुरैःस्तुतांधन्यां नौमि धनप्रदायिनीम् ॥ बालार्कायैवि–पीताम्बरायैधी–तन्नोधन्याप्र ३ ओंह्रींधनदेधन्येस्वाहा १०८ अनेन धन्यादेवी धनदाभवतु ॥

भ्रामरीमन्त्रस्य भैरवऋषिः, अनुष्टुपछन्दः भ्रामरीदेवताः जपे । क्लां । प्राणा । रक्तातिरक्तवसनां रक्तमाल्यविभूषिताम् । भ्रामयन्तीं तु लोकानां भ्रामरीं प्रणमाम्यहम् ॥ रक्तवर्णायैवि–रक्तवस्त्रायैधी–तन्नोभ्रा-



मरीप्र ३ ओंक्लींभ्रामरिजगतामधीश्वरिभ्रामयक्लीं १०८ अनेन दशातो दुर्ग्रहकृतपीडानिवारणार्थं भ्रामरीदेवी प्रीता

भद्रिकामन्त्रस्य भैरवऋषिः, त्रिष्टुपछन्दः भद्रिकादे जपे । हरिणींसौम्यवदनां हरिद्रवस्त्रातुलेपनाम् । परमभद्रदां देवीं भद्रिकां प्रणमाम्यहम् ॥ कृष्णवर्णायैवि रक्तवस्त्रायैधी–तन्नोभद्रिकाप्र ३ ओंक्लूंभद्रिकेममभद्रंदेहिपरमन्यभद्राणिनाशयनाशयस्वाहा १०८ तर्पणं ॥

उल्कामन्त्रस्य शिवऋ गायत्रंछ उल्कादे जपेवि । रक्तकृष्णाम्बरधरां नानालङ्कारभूषिताम् । नाशिनीं सर्वरोगाणामुल्कां तां प्रणमाम्यहम् ॥ रक्तकृष्णायैवि, हरिद्रवस्त्रायैधी–तन्नउल्काप्र ३ ओंलूंउल्केमेरोगंनाशयभञ्जयस्वाहा १०८ उल्काभगवती रोगादिग्रहपीडाहारिणी

सिद्धामन्त्रस्य भैरवऋषिः, अनुष्टुपछन्दः सिद्धादे, जपे । हांहीं । शङ्खकुन्देन्दुधवलां शुक्लपुष्पावतंसिनीम् ।

सर्वसिद्धिप्रदां देवीं सिद्धाख्यां प्रणमाम्यहम् ॥ शुक्लव-र्णायैवि-सौम्यमुख्यैधी-तन्नोसिद्धाप्र ३ ओंह्रींसिद्धेसर्व-मनायांसंसाधयसाधयस्वाहा १०८ अनेन ग्रहपाडाहारि०

सङ्कटामन्त्रस्य भैरवऋ त्रिष्टुछ, सङ्कटादेवता, स-ङ्कटादशायामनिष्टफलनिवारणार्थं जपे । स्हांस्हीं । रक्ताङ्गरागरशनां रक्तमाल्याविभूषिताम् । सुरसुरैःस्तु-तां देवीं सङ्कटां प्रणमाम्यहम् ॥ रक्ताङ्गरागायैवि-र-क्तमाल्यायैधी-तन्नःसङ्कटाप्र ३ ओंस्हौंसङ्कटे मेरोगंप-रमंनाशयनाशयस्वाहा १०८ तर्पणं ॥

हर्षेश्वरमन्त्रस्य नारदऋषिः, त्रिष्टुछ हर्षेश्वरोदेवता हूंबी, ओंश, कुरुकील जपे । हांहीं । प्राणायामः । ध्यायेद्दशभुजं देवं नीलकण्ठं सुतेजसम् । वराऽभय-करं नागमालिनं पार्वतीपतिम् ॥ हर्षेश्वरायवि-हर्षेश्व-रायधी-तन्नःशिवःप्रचोद ३ । ओंहूंहर्षेश्वरभैरवायनमः



१०८ तर्पणं ॥

बगलामुखीमन्त्रस्य नारदऋषिः, बृहतीछन्दः बगला-मुखीदे । ओंह्रांओंह्रीं । सौवर्णासनसंस्थितां त्रिनयनां पीतांशुकोल्लासिनीं हेमाभाङ्गरुचिं शशाङ्कमुकुटां सच-म्पकस्रग्युताम् । हस्तैर्मुद्गरपाशवज्ररशनाः सम्बिभ्रतीं भूषणव्याप्ताङ्गीं बगलामुखीं त्रिजगतां सस्तम्भिनीं चिन्तयेत् ॥ ओंह्रींबगलामुख्यैवि-शशाङ्कमुकुटयैधी-त-न्नोबगलादेवीप्र ३ । ओंह्रींबगलामुखिसर्वदुष्टानांवाचं-मुखंपदं स्तम्भय जिह्वांकीलय बुद्धिंविनाशयह्रींओंस्वा-हा १०८ ॥ अनेन बगलामुखी साङ्गा प्रीयतां प्रीता-

शीतलामन्त्रस्य वामदेवऋ उष्णिक्छ शीतलादे क्लीं-बी, नमःश, ओंकी । ओंह्रांओंह्रीं । नौम्यहं शीतलां देवीं रासभस्थां दिगम्बराम् । मार्जनीकलशोपेतां शूर्पालङ्कृ-तमस्तकाम् । दिगम्बरायैवि-रासभवाहायैधी-तन्नःशी-

तलाग्र ३ ॥ ॐह्रींनमःशीतलायैस्वाहा १०८ ॥

अघोरमन्त्रस्य महाकालाग्निरुद्रऋ पङ्क्तिछ अघोरोदे ॐबी हूँश कुरुकुरुकी । अघोरेभ्यो सर्वात्मने (अङ्गु । हृ) थघोरेभ्यो ब्रह्म (तर्ज । शिर) घोरघोरतरेभ्यश्चज्वालिन्यै (मध्य । शिखा) सर्वतःशर्व सर्वेभ्योपिङ्गलाय (अना । कव) ॐजुंसः ज्योतीरूपाय (कनिष्ठि । नेत्रा) नमस्ते रुद्ररूपेभ्योदुर्भेद्यायपाशुतास्त्राय (कर । अस्त्रा) प्राणायामः । वामे खेटकपाशशार्ङ्गवरसद्दण्डांश्च वीणाणिटके बिभ्राणं ध्वजमुद्गरौ स्वनिभदेव्यङ्कं कुटारं करे । दधेऽस्यऽङ्कुशकन्दुलीषुडमरून्वज्रत्रिशूलाऽभयान्रुद्रस्थं शरवक्त्रमिन्दुधवलं स्वच्छन्दनाथं स्तुमः ॥ बहुरूपायविकोटराक्षायधी-तन्नोऽघोरःप्र ३ । ॐहूंअघोरेभ्योऽथघोरेभ्योघोरघोरेतरभ्यश्च । सर्वतः शर्व सर्वेभ्यो नमस्तेरुद्ररूपेभ्योहूंनमः १०८ । नमस्तस्मै ह्यघोराय घोर-



घोरतरात्मने उत्पत्तिस्थितिसंहारलयानुग्रहहेतवे ॥ अनेन अघोरः प्रीतां ॥

अघोरीश्वरीमन्त्रस्य कालाग्निरुद्रभैरवऋ उष्णिक्छन्दः अघोरीश्वरीदे ॐबी ह्रींश कुरु२की । हांहीं । नौम्यहं तां परम्ब्रह्ममहिषीं चित्स्वरूपिणीम् । ब्रह्मादिकारणातीतां परानन्दमयीं शिवाम् ॥ बहुरूपायैवि-कोटराक्षायैधी-तन्नोऽघोरीप्र ३ । ॐहूंअघोरीश्वरिहूंफट् १०८ ॥ अनेन० अघोरेश्वरी प्रीयतां

वितस्तामन्त्रस्य महेश्वरऋ गायत्रंछ वितस्तादेवता सांबी सींश सःकी । सांसीं । अक्षसूत्राम्बुजकरामादर्शकलशान्विताम् । मीनपद्मासनाऽसीनां वितस्तां शरणं श्रये ॥ वितस्तायैवि कल्हारगौर्यैधी तन्नोमन्दगामिनी प्र ३ ॐसांसींसःवितस्ताभगवत्यैनमः १०८ ॥ तर्पणम् ।

मङ्गल्यराजानकमन्त्रस्य सदाशिवऋ पङ्क्तिछ मङ्ग-

ल्यराजौदे० जपे । मांमीं । कपालखट्वाङ्गधरस्त्रिलोच-
नस्तथाङ्कुशाहीन्दुकरो मदोज्ज्वलः । चतुर्भुजो रक्तत-
नुर्हसन्मुखो जीयादऽसौ मङ्गलराजको विभुः ॥ तत्पु-
रुषायवि, मङ्गल्यराजानकायधी, तन्नोमङ्गलेश्वरःप्र ३ ।
ॐमहारावायरावणाख्यायमङ्गल्यराजानकायनमः १०८।

गौरिर्मिमायेतिमन्त्रस्य प्रजापतिः 'वा' मेधातिथिः
'वा' दीर्घतापसऋषिः, जगतीच्छन्दः, गौरीदेवता-
जपेविनियोगः ॥ ॐगौरीर्मिमाय (अ । हृ) सलिला-
नि तक्षत्येकपदी (न । शि) द्विपदी सा चतुष्पदी (म ।
शि) अष्टापदी नवपदी (अने । क) बभूवषी [क । ने]
सहस्राक्षरा परमे व्योमन्नों (कर । अस्त्रा) प्राणायामः ॥
यस्मिन्नेतत्प्रोतमशेषं मणिमाला सूत्रे यद्वत्काऽपि चरं
चाऽप्यऽचरं च । विश्वत्राणक्रीडणशीलां शिवपत्नीं गौ-
रीमऽम्बामऽम्बुरुहाक्षीमऽहमीडे ॥ सुभगायैवि-काम-



मालिन्यैधी-तन्नोगौरीप्र० ३ ॥ ॐगौरीर्मिमायसलि-
लानि १०८ तर्पणम् श्रीगौरीभगवतीसाङ्गाप्रीताऽस्तु ॥

दिव्यं सुपर्णमितिमन्त्रस्य मेधातिथिः 'वा' पुरुषच्छे-
पऋषिः, त्रिष्टुपछन्दः, सरस्वतीदेवता, जपेविनियोगः
ॐदिव्यं सुपर्णं [अ । हृ] वायसं बृहन्तमऽपांगर्भं
( । शिर) दर्शितमोषधीनाम् [म । शिखा] अभी-
पतो वृष्टिभिस्तर्पयन्तं [अ । कव] सरस्वन्तमऽवसे [क ।
ने] जोहवीमिओं [कर । अस्त्रा] प्राणायामः ॥ बाला-
र्कमण्डलाभासं चतुर्बाहुं त्रिलोचनाम् । पाशाङ्कुशश-
रांश्चापं धारयन्तीं शिवां भजे ॥ सुभगायैवि-काममा-
तन्नःसरस्वती ३ ॥ ॐदिव्यं सुपर्णं वयसं बृहन्तं
१०८ । तर्पणम् ॥ सरस्वती प्रीताऽस्तु ।

तामग्निवर्णामितिमन्त्रस्य नारदऋषिः, गायत्रंछन्दः,
दुर्गादेवता, जपेविनियोगः । ॐतामग्निवर्णां [अं । हृ]

तपसा ज्वलन्तीं [त । शिर] वैरोचनीं कर्मफलेषु
जुष्टाम् [म । शिखा] दुर्गां देवीं (अना । कव) शर-
णमहं प्रपद्ये (कनि । नेत्रा) सुतरसितरसे नमःओं (कर ।
अस्त्रा) प्राणायामः । सिंहस्था शशिशेखरा मरकत-
प्रख्या चतुर्भिर्भुजैः शङ्खं चक्रधनुःशरांश्च दधती
नेत्रैस्त्रिभिः शोभिता । आमुक्ताङ्गदहारकङ्कणरणत्का-
ञ्चीक्वणन्नूपुरा दुर्गा दुर्गतिहारिणी भवतु नो रत्नो-
ल्लसत्कुण्डला ॥ सुभगायवि ३ । ओंतामग्निवर्णां
तपसा ज्वलन्तीं १०८ तर्पणम् ॥ दुर्गा प्रीताऽस्तु ॥

याः सुरूपा इति मन्त्रस्य आङ्गिराऋषिः, त्रिष्टुपछ-
न्दः, श्रीमदऽद्वैतरूपिणीज्वालामुखीदेवता, जपेविनि-
योगः । ओंयाः सरूपा विरूपा एकरूपा [अं । ह]
यासामऽग्निरिष्ट्या (तर्ज । शिर) नामानि वेद (म ।
शिखा) याअङ्गिरसस्तपसेह [अना । कव] चक्रुस्ता-



भ्यः (कनि । ने) पर्जन्य महि शर्म यच्छओं [कर ।
अस्त्रा] प्राणायामः । ज्वालापर्वतसंस्थितां त्रिनयनां
पीठत्रयाधिष्ठितां ज्वालाडम्बरभूषितां सुवदनां नित्या-
मऽद्दशां जनैः । षट्चक्राम्बुजमध्यगां वरगदाऽम्भोजाऽभ-
यान्बिभ्रतीं चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौ-
म्यहम् ॥ अम्बिकायैवि, महादेव्यैधी, तन्नोऽम्बाप्र ३ ।
ओंयाः सरूपा विरूपा १०८ तर्पणम् ज्वालामुखी प्रीताऽ

सरस्वतीं देवयन्त इति मन्त्रस्य देवा असुरा ऋषयः,
जगतीछन्दः, सरस्वतीदेवता, जपेविनियोगः ॥ ओं-
सरस्वती देवयन्तो (अं । ह) हवन्ते (तर्ज । शिर)
सरस्वतीमध्वरे तायमाने (मध्य । शिखा) सरस्वतीं
(अना । कव) सुकृतो आह्वयन्ते [कनि । नेत्रा] सर-
स्वती दाशुषे वार्यं धात्ओं (कर । अस्त्रा) प्राणायामः ।
।सितवर्णाऽलङ्कारे सरस्वति समस्तवाङ्मयाधारे । कम-

लजमानसवरले मृगाङ्कधवले नमस्तुभ्यम् ॥ पद्महस्तायैवि, हंसस्थायैधी, तन्नोवाग्देवीप्र ३ । ओंसरस्वतीं देव १०८ तर्पणम् ॥ सरस्वती साङ्गा प्रीतास्तु ॥

यस्मादन्यो इति मन्त्रस्य, दक्षिणामूर्तिर्ऋषिः, पांक्तिछ, श्रीत्रिपुरसुन्दरीदेवता, जपेविनियोगः ॥ ओंयस्मादऽन्यो [अ । हृ] न परोऽस्ति [तर्ज । शिर] जातो य आविवेश भुवनानि विश्वा (मध्य । शिखा) प्रजापतिः प्रजया (अना । कव) संविदानस्त्रीणिज्योतींषि [कनि । नेत्रा] सचते सषोडशीओं (कर । अस्त्रा) प्राणायामः । गणेशवटुकस्तुता० सूर्यरूपायैवि, वारणासनायैधी, तन्नो महात्रिपुरसुन्दरीप्र ३ । ओंयस्मादन्यो १०८ तर्पणम् ॥

ओंइन्द्र आशाभ्यस्परि इति मन्त्रस्य, भर्गरूप तपसोमन्यऋषिः, जगतीच्छन्दः, शत्रुहाइन्द्रोदेवता, शत्रुसङ्कटनिवारणार्थे जपेविनियोगः ॥ ओंइन्द्र (लांवज्र-



हस्तायनमः (अं । हृ) आशाभ्यस्परि (लींशचीपतयेनमः (तर्ज । शिर) सर्वाभ्यो (लूंपुरन्दरायनमः (मध्य । शिखा) अभयङ्करत् (लैंमघवतेनमः (अना । कव) जेता शत्रून् (लौंपाकशासनायनमः [कनि । नेत्रा] विचर्षणिरों [लः वृत्रघ्नेनमः (कर । अस्त्रा) प्राणायामः ऐरावणसमारूढं सहस्रनयनं हरिम् । देवादिभिरभिष्टुतं शुक्लमाल्यधरं विभुम् । सर्वसिद्धिप्रदातारं ध्यायेऽहं वृत्रसूदनम् ॥ पुरन्दरायवि-दिवस्पतयेधी-तन्नइन्द्रःप्र ३ ॥ ओंइन्द्र आशाभ्यस्परि सर्वाभ्यो अभयङ्करत । जेता शत्रून्विचर्षणिरोम् १०८ । देवागातु, सर्वशत्रुहा इन्द्रः प्रीतोऽस्तु ॥

(दिक्पालाः) अस्य श्रीइन्द्रमन्त्रस्य, सदाशिवऋषिः, जगतीछ, इन्द्रोदे, ह्रींबी, श्रींश, क्लींकी, जपेविनियोगः । ह्रांश्रांक्लां । प्राणायामः । उद्यत्सूर्यायुतरुचिनिभं

मौलिरत्नांशुदीप्तं देवं पद्माऽशनिकरमऽजं नेत्रसाहस्र-
म्यम् । हाराऽनर्घ्यस्फुरदुरुमणिव्याप्तवक्षःस्थलंतं ध्याये
देवं प्रणमितपदं पूर्वदिक्पालमिन्द्रम् ॥ शचीपतयेवि ३
ॐह्रींश्रींक्लींब्लूंइन्द्रायवज्रहस्तायस्वाहा १०८ (ब्रह्मात्र्ऋ-
षिः गायत्रंछ) ॐइन्द्रापर्वता बृहता रथेन वामीरिष
आवहतं सुवीराः । वीतं हव्यान्यध्वरेषुदेवा वर्धेथां
गीर्भिरिळया मदन्तामोम् १०८ ॥

अस्यश्री अग्निमन्त्रस्य, सदाशिवऋषिः, जगतीछ,
वैश्वानरोदे, रंबी, त्रोंश, ह्रांकी, जपेविनियोगः ॥ त्रांत्रीं
प्राणा । इष्टां शक्तिं पुस्तकाऽभीतिमुच्चैर्दीर्घैर्दोर्भिर्धारयन्तं
जपाभम् । हेमाकल्पं पद्मसंस्थं त्रिनेत्रं ध्याये वह्निं बद्ध-
मौलिं जटाभिः ॥ वैश्वानरयवि-शक्तिहस्तायधी-तन्नो-
ऽग्निःप्र० ३ ॥ ॐह्रींत्रोंरांवैश्वानरजटाभारभास्वर सिद्धिं-
मेदेहिदेहिस्वाहा १०८। (ब्रह्मात्र्ऋर्षिः, गाछ) ॐअग्निः



सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्टाम् । अग्नी
रोदसी विचरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिमों१०८

अस्यश्रीधर्मराजमन्त्रस्य, कालाग्निभैरवऋ, त्रिष्टुपछ,
श्रीधर्मराजोदे, ऐंबी, जूंश, ह्रांकी जपेविनियोगः । ह्रांह्रीं
प्राणायामः । कल्पान्तसूर्यानलदीप्तिदीप्तं दण्डाऽभया-
ऽम्भोजवरान्दधानम् । दोर्भिश्चतुर्भिः कमलासनस्थं भ-
जामि देवं हृदि धर्मराजम् ॥ दण्डधरायवि-धर्मरा-
जायधी-तन्नोयमःप्र ३ । ॐह्रांजूंऐंसः धर्मराजायद-
ण्डहस्तायनमः १०८ [ब्रह्मात्र्ऋर्षिः, गायत्रंछ] ॐयमो-
दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमि-
त्तस्थे यत्प्राणद्वायुरक्षितमोम् १०८ धर्मराज प्रीतोऽस्तु ।

अस्यश्रीनैर्ऋतिमन्त्रस्य ब्रह्मात्र्ऋषिः, विराट्छन्दः, श्री-
रक्षोधिपतिर्नैर्ऋतिर्देवता, ह्रांबी, हैंशक्तिः, ह्रःकी, ज-
पेविनियोगः । ह्रांह्रीं । प्राणायामः ॥ वीरोत्तमं शक्तिग-

दाङ्कुशाब्जान्दोर्भिर्दधन्तं शरदम्बुधाभम । रक्ताम्बरं लो-
हितलोचनं तं ध्यायामि नित्यं नैर्ऋतिं हृदब्जे ॥ रक्षो-
धिपतयेवि–खड्गहस्तायधी–तन्नोनैर्ऋतिःप्र ३ । ॐश्रीं-
हूंनैर्ऋतयेखड्गहस्तायनमः १०८ । [ब्रह्माऋषिः, गायत्रंछ]
ॐयन्ते देवी निर्ऋतिराबबन्ध पाशंग्रीवास्वविचर्त्यम् ।
तन्ते विष्याम्यायुषोनु मध्येथा विषितः पित्तमद्धिप्रसु-
क्तॐ १०८ ॥ रक्षोधिपतिनैर्ऋतिः प्रीतास्तु ।

अस्यश्रीवरुणमन्त्रस्य, ब्रह्माऋषिः, अनुष्टुपछ, वरु-
णोदे, श्रूंबी, श्रैंश, श्रःकी, जपेविनियोगः । श्रांश्री ।
संवर्तवायुगातिमऽर्कसहस्रदीप्तं पाशाङ्कुशाऽभयवरान्द्विभु-
जैर्दधानम् । त्र्यक्षं महोग्रमकरध्वजमीनग्राहं वन्द्यं भजे
वरुणमाऽदिसुरैर्विनुत्यम् ॥ अपांपतयेवि– पाशहस्ता-
यधी–तन्नोवरुणःप्र ३ । ॐश्रींद्रंजुंसःवरुणायपाशह-
स्तायस्वाहा १०८ [ब्रह्माऋ, गाछ] उदुत्तमं वरुण



पाशमस्मदऽवाधमं विमध्यमं श्रथाय । अथा वयमा-
दित्यव्रते तवानागसो अदितये स्यामॐ १०८ ॥

अस्यश्रीवायुमन्त्रस्य, भगवान्पुलस्त्यऋषिः, त्रिष्टुपछ,
वायुर्दे, क्लींबी, हूंश, स्वाहाकी, जपेविनियोगः क्लांक्लीं ।
प्राणाया । अमलवपुषमुद्यत्सूर्यभासं जटाऽढ्यं कनककल-
शहस्तं पद्मयुग्मायुधाढ्यम् । सकलभुवनप्राणं श्वेतवस्त्रा
दिभूषं हृदि सकलसुरेशं वायुमाद्यं भजेऽहम् ॥ मात-
रिश्वायवि–ध्वजहस्तायधी–तन्नोवायुःप्र ३ । ॐयंक्लींहूं-
वंवायवेकलशहस्तायनमः १०८ ॥ ( ब्रह्माऋ, गाछ )
ॐवायवायाहिदर्शतेमे सोमा अरंकृताः । तेषां पाहि-
श्रुधीहवमों १०८ ॥ प्राणाधिपतिर्वायुः प्रीतोऽस्तु ॥

अस्यश्रीकुबेरमन्त्रस्य, महारुद्रऋ, पंक्तिछ, कुबेरादे,
क्लींबी, म्लूंश, हूसौःकी, जपेविनियोगः । क्लां । प्राणा,
रक्तोत्पलाभं रविकोटिरूपं शक्त्यऽक्षसूत्राङ्कितहस्तपद्मम् ।

बद्धासनं स्मरमुखं द्विनेत्रं ध्यायामि देवं हृदये कुवेरम् ॥
नरवाहनायवि—हरसखायधी—तन्नःकुवेरःप्र ३ । ऊँह्रीं-
श्रींक्लींम्लूंह्सौः शक्तिहस्ताय कुवेरायनमः १०८ [ब्रऋ,
गाछ ] ऊँराजाधिराजाय प्रसह्य साधने नमो वयं वैश्र-
वणाय कुर्महे । समे कामान्कामकामाय मह्यं कामेश्वरोवै-
श्रवणोददातु । कुवेराय वैश्रवणाय महाराजाय वै न-
मोनमऊँ १०८ ॥ यक्षाधिपतिः कुवेरः प्रीताऽस्तु ॥

अस्यश्रीईशानमन्त्रस्य, ब्रह्माऋ, अनुष्टुपछ, महारु-
द्रोदे, गंबी; हःश, ऊँकी, जपेविनियोगः । गांगीं ।
प्राणा । कपालखट्वांगधरं त्रिनेत्रं भस्मोज्ज्वलाङ्गं शशि-
खण्डचूडम् । गङ्गाधरं बद्धजटाकलापं ध्याये शिवं गो-
पतिवाहमीशम् ॥ तत्पुरुषायवि—त्रिशूलहस्तायधी—तन्न
ईशानःप्र ३ । ऊँगंह्रौंशिवायनमः १०८ [ब्रऋ, गाछ
ईशानन्त्वा शुश्रुमा वयं धनानां धनपते गोमदश्वे अश्व-



वद्भूरिपुष्टं हिरण्यवदऽन्नवद्धेहि मह्यमों १०८ ॥

अस्यश्रीब्रह्ममन्त्रस्य, सदाशिवऋ, गायत्रंछ, ब्रह्मा-
दे, ह्रांबी, ह्सौःश, ऊँकी, जपेविनियोगः । ह्रांह्रीं ।
प्राणा । ब्रह्माचतुर्मुखोदेवश्चतुर्बाहुविभूषितः । कृष्णा-
जिनोत्तरीयश्च राजीवासनसंस्थितः ॥ कमण्डलुदण्ड-
धरोऽक्षमालाब्जधरस्तथा । ध्यात्वा पत्रेषु विन्यस्ये-
त्सर्वकिल्विषनाशनः ॥ चतुर्मुखायवि—कमण्डलुधराय-
धी—तन्नोब्रह्माप्र ३ । ऊँह्रांह्सौःचतुर्मुखपरमार्थसिद्धिं-
देहिदेहिस्वाहा १०८ ( ब्रऋ, गाछ ) ऊँब्रह्म जज्ञानं
प्रथमं पुरस्ताद्विसीमतः सुरुचोवेनआवः । सबुध्न्या
उपमा अस्य विष्ठाः सतश्च योनिसऽसतश्चविवःऊो १०८

अस्यश्रीविष्णुमन्त्रस्य, शिवऋषिः, त्रिष्टुपछन्दः, ना-
रायणोदे, श्रींबी, ह्रींश, ऊँकी, जपेविनीयोगः । ह्रींश्रीं ।
अतसीपुष्पसङ्काशं शङ्खचक्रगदाधरम् । पीताम्बरं

सदा ध्यायेद्गरुडासनसंस्थितम् ॥ नमोऽस्त्वाऽनन्ताय-
सहस्रमूर्तये । सहस्रपादाऽक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने-
पुरुषायशाश्वते सहस्रकोटीयुगधारिणेनमः ३ ॥ ओह्रीं-
ह्सौःह्रींश्रींनारायणायनमः १०८ [ ब्रह्मऋ, गायत्रंछ ]
ओंवषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपि-
विष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात
स्वस्तिभिः सदा नओं १०८ परमात्म नारायणः प्रीतोस्तु
( नवदुर्गा ) अस्यश्री नवार्णमन्त्रस्य, ब्रह्मविष्णुमहेश्व-
राऋषयः, गायत्र्युष्णिगऽनुष्टुप्छन्दांसि, श्रीमहाका-
लीमहालक्ष्मीमहासरस्वत्योदेवताः, नन्दाशाकम्भरीभी-
माःशक्तयः, रक्तदन्तिकादुर्गाभ्रामर्योबीजानि, अग्निवा-
युसूर्यास्तत्त्वानि, महाकालीमहालक्ष्मीमहासरस्वतीप्रीत्य-
र्थंजपेविनियोगः । ऐं ( अं । ह ) ह्रीं ( त । शि ) क्लीं
( म । शिखा ) चा ( अना । कव ) मुण्डायै ( कनि ।



नेत्रा ) विच्चे ( कर । अस्त्रा ) प्राणायामः । खड्गं चक्र-
गदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः शङ्खं सन्द-
धतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् । यामस्तौत्सु-
पिते हरौ कमलजो हन्तुं मधुं कैटभं नीलाश्मद्युति-
मास्यपाददशकां सेवे महाकालिकाम् ॥ १ ॥ अक्षस्र-
क्परशू गदेषुकुलिशं पद्मं धनुःकुण्डिकां दण्डं शक्ति-
मऽसिं च चर्मजलजं घण्टां सुराभाजनम् । शूलं पा-
शसुदर्शने च दधतीं हस्तैः प्रवालप्रभां सेवे सैरिभ-
मर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ॥२॥ घण्टा-
शूलहलानि शङ्खमुसुले चक्रं धनुः सायकं हस्ता-
ब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम् । गौरीदे-
हसमुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्रसरस्वती-
मऽनुभजे सुम्भादिदैत्यार्दिनीम् ॥ ३ ॥ बीजत्रयायवि
तत्प्रधानायधी–तन्नःशक्तिःप्र ३ । ऐंह्रींक्लींचामुण्डायै-

विच्चे १०८ ॥ श्रीनानाशक्तिरूपा दुर्गादेवी प्रीतास्तु ॥

अस्यश्रीशैलपुत्रीमन्त्रस्य महाकालभैरवऋषिः, त्रिष्टु-
प्छ, शैलपुत्रीदे, ह्रांबी सौंश, उँकी जपेविनियोगः ।
उँह्रां । प्राणा । उद्यद्दिनेशायुतसन्निभाभां शशाङ्कले-
खामुकुटां चतुर्भुजाम् । रक्ताम्बरामऽग्निरवीन्दुलोचनां
तां शैलपुत्रीं वरदां स्मराम्यहम् ॥ कामदायैवि-शैल-
पुत्र्यैधी-तन्नःशैलाप्र ३ । उँह्रींश्रींऐंसौःसौःऐंश्रींह्रींशै-
लपुत्र्यैनमः १०८ ॥ शैलपुत्री प्रीताऽस्तु ॥

अस्यश्रीब्रह्मचारिणीमन्त्रस्य, भैरवऋ, अनुष्टुप्छ, ब्र-
ह्मचारिणीदे, श्रींबी, ह्रींश, क्लींकी, जपेविनियोगः ।
ह्रांह्रीं । प्राणा । कमलासिवराऽभयायुधां शशिवर्णां
शशिशेखरां शिवाम् । अरुणाभरणां त्रिलोचनां हृद-
ये तां भजे ब्रह्मचारिणीम् ॥ सुभगायैवि-कामचारि
ण्यैधी-तन्नोब्रह्मचारिणीप्र ३ । उँश्रींह्रींक्लींसःब्रह्मचा-



रिणीऐंफट्स्वाहा १०८ ॥ अनेन-ब्रह्मचारिणी प्रीतास्तु

अस्यश्रीचण्डघण्टामन्त्रस्य, भैरवऋ, अनुष्टुप्छ, च-
ण्डघण्टादे, क्लींबी, सौःश, श्रींकी, जपेविनियोगः ।
क्लां । प्राणा । बालां स्मशाङ्कायुतपूर्णवक्त्रां त्रिलोचनां
स्मेरमुखीं प्रसन्नाम् । शङ्खाब्जचापाऽमृतकुम्भहस्तां
श्रीचण्डघण्टां हृदये स्मरामि ॥ चण्डघण्टायैवि,का-
मदायैधी-तन्नोऽघोरीप्र ३ । उँक्लींसौःश्रींह्रींऐंसौःच-
ण्डघण्टायैनमः १०८ ॥ अनेन-चण्डघण्टा प्रीताऽस्तु ।

अस्यश्रीकूष्माण्डीमन्त्रस्य, ब्रह्माऋ, अनुष्टुप्छ, कू-
ष्माण्डीदे, क्रींबी, ह्रींशक्ति, श्रींकी, जपेविनियोगः ।
क्रां । प्राणा । शूलं कपालं वरदामऽभीतिं करैर्वहन्तीं
शवाविष्टरस्थाम् । नागोज्ज्वलां भक्तहितां हृदब्जे कू-
ष्माण्डशक्तिं प्रभजे सुवक्त्राम् ॥ कूष्माण्ड्यैवि-भक्त-
प्रियायैधी-तन्नोभवानीप्र ३ । उँश्रींह्रींक्रींकूष्माण्ड्यै

नमः १०८ ॥ अनेन-कूष्माण्डी प्रीयतां प्रीताऽस्तु ।

अस्यश्रीस्कन्दमातृमन्त्रस्य, भैरवऋषिः, त्रिष्टुपछन्दः, स्कन्दमातादे, ह्रींबी, हौंश, हःकी, जपेविनियोगः । ह्रां । प्राणा । सिताशुकोटिस्फुरदास्यशोभां त्रिलोचनां कुङ्कुमपीतवस्त्राम् । सिंहासनां नागमुखादियुक्तां भजे हृदि स्कन्दभुवं भवानीम् ॥ स्कन्दमात्रेवि, सुस्मितायैधी, तन्नोभवानीप्र ३ । उॕंह्रींश्रींहौःस्कन्दमात्रेहःहः-फट्स्वाहा १०८ ॥ अनेन-स्कन्दमाता प्रीताऽस्तु ।

अस्यश्रीकात्यायनीमन्त्रस्य, सदाशिवऋ, अनुष्टुपछ, कात्यायनीदे, ह्रींबी, उॕंश, स्वाहाकी, जपेविनियोगः । ह्रां । प्राणा । सहस्रकरदीप्ताङ्गीं त्र्यर्चीं रक्ताम्बरोज्ज्वलाम् । चतुर्भुजां शवगतां नौमि कात्यायनीं शिवाम् ॥ चतुर्भुजायैवि, कात्यायन्यैधी, तन्नःशिवाप्र ३ । उॕंह्रीं-कात्यायन्यैनमः १०८ ॥ अनेन-कात्यायनी प्रीताऽस्तु ।



अस्यश्रीकालरात्रीमन्त्रस्य, भैरवऋ, अनुष्टुपछ, कालरात्रीदे, श्रींबी, ह्रींश, उॕंकी, जपेविनियोगः । श्रांह्रां । प्राणा । नवाम्बुदद्युतिभिनेन्दुवह्निनेत्रां गदाम्भोजकरां हसन्तीम् । पीताम्बरां मुक्तकुचोज्ज्वलाङ्गीं श्रीकालरात्रीं मनसा स्मरामि ॥ कालरात्र्यैवि-घोररूपिण्यै-धीमहि, तन्नोरात्रीप्र ३ । उॕंश्रींह्रींह्रींश्रींउॕंकालरात्रिक्लीं-ऐंसःफट्स्वाहा १०८ ॥ अनेन-कालरात्री प्रीताऽस्तु ।

अस्यश्रीमहागौरीमन्त्रस्य, कालभैरवऋ, अनुष्टुपछ, महगौरीदे, उॕंऐंबी, उॕंसौःश, उॕंऐंकी; जपेविनि । गां । प्राणा । उद्यदर्कसमानाभां सितांशुमुकुटां शिवाम् । चतुर्भुजां त्रिनयनां महागौरीं नमाम्यहम् ॥ पार्वत्यैवि-महागौर्यैधी-तन्नोऽम्बाप्र ३ । श्रींऐंश्रोंसौः-गगिंगूंमहागौर्यैनमः १०८ ॥ अनेन-महागौरी प्रीताऽस्तु ।

अस्यश्रीदेवदूतीमन्त्रस्य, भैरवऋ, अनुछ, देवदूतीदे,

क्लींबी, सौःश, श्रींकी, जपेविनियो । क्लां । प्राणा । शशा-
ङ्कबिम्बद्युतिमुत्पलाढ्यां प्रतप्तचामीकरगात्रयष्टिम् । सि-
ताम्बरां प्रेतगतां त्रिनेत्रां श्रीदेवदूतीं द्विभुजां भजामि ॥
जयदात्र्यैवि–देवदूत्यैधी– तन्नःकालीप्र ३ । उॕऐंक्लींसौः-
श्रींह्रींदेवदूतिश्रींफट्ठःठःठःस्वाहा १०८ । अनेन देवदूती

[नवग्रह] अस्यश्रीसूर्यमन्त्रस्य, शतर्चिनऋ, त्रिष्टुपछ,
सूर्योदे, जपेविनियोगः । ह्रां । प्राणा । प्रत्यक्षदेवं विषदं
सहस्रमरीचिभिः शोभितभूमिदेशम् । सप्ताश्वगं सद्ध्व-
जहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे ॥ धूम्रध्वजं
तथा मालां रश्मिपुञ्जं करद्वये । वहन्सप्ताश्वगः सूर्यो
देवस्त्र्यक्षोऽवतात्स नः ॥ भास्करायवि–सहस्ररश्मयेधी–
तन्नःसूर्यःप्र ३ । उॕह्रांह्रींसःसूर्यायनमः १०८ (आकृ-
ष्णेनेतिमन्त्रस्य) । उॕआकृष्णेन रजसा वर्तमानो निवे-
शयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽदे-



वो याति भुवनानि पश्यन्नों १०८ ॥ अनेन-सूर्यः प्रीतोऽ

अस्यश्रीचन्द्रमन्त्रस्य, गोतमऋ, त्रिष्टुप्छ, सोमो, जपे ।
ह्रां । प्राणा । शङ्खप्रभमेनप्रियं शशाङ्कमीशानमौलि-
स्थितमीड्यरूपम् । तमीपतिमम्बुजयुग्महस्तं ध्याये हृद-
ब्जे शशिनं ग्रहेशम् ॥ रश्मिपुञ्जं तथा मालां धूम्र-
ध्वजं सदा वहन् । शङ्खकुन्देन्दुधवलः शशी पाया-
त्त्रिलोचनः ॥ निशाकरायवि–शीतरश्मयेधी–तन्नःसो-
मःप्र ३ । चंचन्द्रमसेनमः १०८ उॕश्रींक्लींचन्द्रमसेनमः
१०८ [यातेधामानीतिम, गोऋ, त्रि० ] या ते धामानि
दिवि या पृथिव्यां याः पर्वतेष्वोषधीष्वप्सु । तेभिर्नो
विश्वैः सुमना अहेळन्राजन्सोम प्रतिहव्या गृभायउॕ १०८

अस्यश्रीभौममन्त्रस्य, आङ्गिराऋ, गायत्रंछ, भौमोदे,
जपेविनि । रांरीं । प्राणा । प्रतप्तगाङ्गेयनिभं ग्रहेशं सिंहा-
सनस्थं कमलासिहस्तम् । सुरासुरैः पूजितपादपद्मं भौमं

दयालुं हृदये स्मरामि ॥ कमण्डल्वऽक्षस्रग्युक्तो मयूरवरवाहनः । रक्तास्त्रिलोचनः स्रग्वी कुजो नोऽव्यान्महीसुतः ॥ अङ्गारकायवि–धरासुतायधी–तन्नोभौमःप्र ३ । १०८ (अग्निर्मूर्धेतिम, अंगिराऋ)ओंअग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतेओं १०८ ॥

अस्यश्रीबुधमन्त्रस्य, वसिष्ठऋ, त्रिष्टुप्छ, बुधोदे, जपे । ह्रां । प्राणा । सोमात्मजं हंसगतं द्विबाहुं शङ्खेन्दुरूपमसिपाशहस्तम् । दयानिधिं भूषणभूषिताङ्गं बुधं स्मरे मानसपङ्कजेऽहम् ॥ गरुडासनसंस्थोऽयं साक्षमालाकमण्डलुः । किरीटहारभूषाढ्यो बुधो नोऽव्यात्त्रिलोचनः ॥ रौहिणीयायवि–चन्द्रपुत्रायधी–तन्नोबुधःप्र३ ओंह्रींबुधायनमः १०८ ( बोधास्व म इति मन्त्रस्य, वसिऋ, त्रिष्टुछ ) ओंबोधास्व मे मघवन्वाचमेमां यान्ते वसिष्ठो अर्चति प्रशस्तिम् । इमाब्रह्म सधमादे जुषस्वओं १०८ ।



अस्यश्रीबृहस्पतिम, गृत्समदऋ, त्रिष्टुछ, बृहस्पतिर्देवता, जपे । ह्रां । प्राणायामः । तेजोमयं शक्तित्रिशूलहस्तं सुरेन्द्रज्येष्ठस्तुतपादपद्मम् । मेधानिधिं हस्तिगतं द्विबाहुं गुरुं स्मरे मानसपङ्कजेऽहम् ॥ त्र्यक्षः कमण्डलुधरो गजस्थः स्रग्समन्वितः । विद्यायुक्तो हि जीवोसौ पायान्नः कुमुदद्युतिः ॥ वाचस्पतयेवि–सुराचार्यायधी तन्नोजीवःप्र ३ । ओंह्रींभोगास्पदायनमः १०८ ( बृहस्पतइतिम, गृत्सऋ, त्रिछ ) ओंबृहस्पते अतियदर्यो अर्हत्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं देहिचित्रमों १०८ ॥ बृहस्पतिः प्रीतोऽ ।

अस्यश्रीशुक्रमन्त्रस्य, क्रौञ्चाङ्गिरसऋ, त्रिष्टुप्छ, शुक्रोदेवता, जपे । स्वां । प्राणा । सन्तप्तकाञ्चननिभं द्विभुजं दयालुं पीताम्बरं धृतसरोरुहदण्डशूलम् । क्रौंचासनमऽसुरसेवितपादपद्मं शुक्रं स्मरे द्विनयनं हृदयाम्बु-

जेऽहम् ॥ काव्योऽक्षकलशी पीतस्त्र्यक्षोऽव्यात्पीतवर्ण कः । विधिपुस्तकहस्तो वा क्वचिद्दृष्टो महागमे ॥ भार्गवायवि–दैत्यगुरवेधी–तन्नःशुक्रःप्र ३ । ऊँह्रींअसुरोत्तमायशुक्रायनमः १०८ (अन्नात्परि इतिमन्त्रस्य, क्रौंचाऋ) ऊँअन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधुऊँ १०८ ॥ अनेन–शुक्रः प्रीयतां प्रीतोऽस्तु

अस्यश्रीशनिमन्त्रस्य, कुत्सऋ, गायत्रंछ, शनैश्चरोदे, जपे । ह्रां । प्राणा । नीलाञ्जनाभं मिहिरेष्टपुत्रं ग्रहेश्वरं पाशभुजंगपाणिम् । सुरासुराणां भयदं द्विबाहुं शनिं स्मरे मानसपङ्कजेऽहम् ॥ कलशाऽक्षस्रगऽन्वीतो नरसंस्थस्त्रिलोचनः । दण्डाढ्यो नागसंयुक्तः कृष्णोऽव्यात् कृष्णस्रग्युतः ॥ सूर्यपुत्राय विद्महे–छायासुतायधीमहि । तन्नः सौरः प्रचोदयात् ३ । ऊँह्रींकृष्णवर्णायशनै-



श्चरायनमः १०८ । (शन्नादेवीरितिम, सिन्धुद्वीपऋ, गायत्रंछ) ऊँशन्नोदेवीरभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तुनःऊँ १०८ ॥ शनैश्चरः प्रीतोऽस्तु ।

अस्यश्रीराहुमन्त्रस्य, गौतमऋ, गायत्रंछ, राहुर्दे, जपे। ह्रां । प्राणा । शीतांशुमित्रान्तकमीड्यरूपं घोरं च वैडूर्यनिभमऽत्राहुम् । त्रैलोक्यरक्षापरमिष्टदं च राहुं भजे मानसपङ्कजेऽहम् ॥ शीर्षाकृतिस्तु वै राहुः स्रग्वी कुण्डलभूषितः । सिंहासनरतः पायादऽमृताहरणप्रियः ॥ सैंहिकेयायवि–अमृतप्रियायधी–तन्नोराहुःप्र ३ । ऊँह्रींअमृतप्रियायनमः १०८ (कया नश्चित्र इति मन्त्रस्य गौऋषिः) ऊँकया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृताऊँ १०८ ॥ अनेन राहुः प्रीतोऽस्तु ॥

अस्यश्रीकेतुमन्त्रस्य, अङ्गिराऋ, गायत्रंछ, केतुर्देव, जपे । ह्रां । प्राणा । लाङ्गूलयुक्तं भयदं जनानां

कृष्णाम्बुभृत्सन्निभमेकवीरम् । कृष्णाम्बरं शक्तित्रिशूल-
हस्तं केतुं भजे मानसपङ्कजेऽहम् ॥ भुजङ्गमैस्तु दश-
भिर्युतोऽक्षकलशान्वितः । केतुस्त्र्यक्षो महाकायोऽवता-
न्नोऽयं तमीच्छविः ॥ अग्निपुत्रायवि–पुच्छवतेधी–तन्नः-
केतुःप्र ३ । ओंह्रींज्योतिष्केतवेनमः १०८ ( केतुङ्कृण्वन्नि-
तिमन्त्रस्य– ) ओंकेतुङ्कृण्वन्नकेतवे यशो मर्या अपेशसे ।
समुषद्भिरजायथाओं १०८ ॥ अनेन–केतुः प्रीतोऽस्तु ।
अस्यश्रीवास्तुष्पतिमन्त्रस्य, वसिष्टः 'वा' भैरवऋ, त्रि-
ष्टुपछ, वास्तुष्पतिर्दे, जपे । वां । प्राण । श्वेताम्बरः
सकलदेवसमाश्रिताङ्गः काकालिमेचकतनुर्द्विभुजो ग-
दाभृत् । सद्रत्नपात्रवरभूषितबाहुदण्डो दिश्यात्स वा-
स्तुपुरुषो हृदयेप्सितंनः ॥ सितंत्र्यक्षं सौम्यमुखं द्विभुजं
वास्तुपूरुषम् । अक्षसूत्रशूलधरं चिन्तयेद्विघ्ननाशनम् ॥
वास्तुपुरुषायवि–वास्तुराजायधी–तन्नोवास्तुःप्र ३ । ओं



वांवास्तुपुरुषायनमः १०८ [वा] ओंह्रांवांवास्तुपुरुषा-
यनमः १०८ ( अमीवहेतिमन्त्रस्य ) ओंअमीवहा वास्तो-
ष्पदे विश्वा रूपाण्याविशन् । सखा स्वशेव एधि-
नःओं १०८ ॥ अनेन शिख्यादयो वास्तुपुरुषाः प्रीताःसन्तु

अभयङ्करीमन्त्रस्य, शिवऋ, त्रिष्टुछ, अभयङ्करीदे,
जपे । ह्रूं । प्राण । इन्द्रऽग्निसूर्यनयनां पाशाङ्कुश-
धरां पराम् । द्विभुजां सिंहमध्यस्थां भजेऽहमऽभयङ्क-
रीम् ॥ शचीपतयेवि–पाकशासनायधी–तन्नइन्द्रःप्र ३
ओंह्रींश्रींअभयङ्कर्यैनमः १०८ मालांशिरसि पूर्ववन्न्यासः ।
गुह्यातिगुह्यगुप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु
मे देवि त्वत्प्रसादान्महेश्वरि ॥ अनेन मन्त्रजपेन आत्मनो
वाङ्मनःकायापार्जितपापनिवार० अभयङ्करी प्रीताऽस्तु ॥

यतइन्द्र इतिमन्त्रस्य, भर्गोदेवऋषिः, बृहतीछन्दः,
अभयङ्करीदेवता, आत्मनो० जपविनियोगः ॥ भर्गो-

देवऋषयेनमः शिरसि, बृहतीछन्दसेनमः मुखे, अभयङ्करीदेवतायैनमः हृदि, जपेविनियोगायनमः सर्वाङ्गेषु ॥ ॐयतइन्द्र भयामहे (अङ्गु । हृदि) ततो नो (तर्ज । अभयङ्कृधि (मध्य । शिखा) मघवञ्छग्धि (अनामि । कव) तव तन्व ऊतिभि (कनिष्ठि । नेत्रा) र्विद्विषो विमृधो जहिॐ (करतल । अस्त्राय) प्राणायामः । ध्यानं ॥ इन्द्राग्निसूर्य– । शचीपतयेवि ३ ॥ ॐयत इन्द्र भयामहे १०८ ॥ मालांशिरसि । प्राणायमः ॥ देवा गातुश्रोत्रिया देवा गातुविदो, गातुं वित्वा, गातुमित, मनसस्पत इमं देवयज्ञं स्वाहा, वाचेस्वाहा, वातेऽधा ॥ अनेन मन्त्रजपेन अभयङ्करी प्रीयतां प्रीताऽस्तु ॥ आपन्नोस्मि शरण्योसि । यदक्षरपदभ्रष्टं । नमो ब्रह्मणे इति तर्पणम् ॥

इति कर्मकाण्डे जपविधियुतं तृतीयं पुस्तकम ॥

लिनी, ([129]द्वितीयभेद) [130]कामेश्वर, [130]शिवा, [131]उमा, अर्धनारीश्वर, [131]कुबेर, [132]वेताल, [133]जम्बकेश्वर, [133]सन्तानगोपाल, [134]रामचन्द्र, [135]मङ्गला, [135]पिङ्गला, [136]धन्या [136]भ्रामरी, [137]भद्रिका, [137]उल्का, [137]सिद्धा [138]सङ्कटा, [137]हर्षेश्वर, बगलामुखी, [139]शीतला, [139]अघोरभै, [140]अघोरेश्वरी, वितस्ता [141]मङ्गल्यराजानक, वै गौरीर्मिमाय, [142]सरस्वती दिव्यं [143]सुपर्ण- [144]सरस्वतीन्दे. दुर्गा [143]तामग्निवर्णां. ज्वाला– [144]याः सरूपा, त्रिपुरा– [146]यस्मादन्यो, (दिग्पाला) [146]इन्द्र,–इन्द्र [147]आशाभ्यस्परि ॥ ता–वैदि[148]कं, ता- [148]अग्नि, [148]वै, ता [149]यमराज, वै, ता- [149]नैर्ऋति, [150]वै, ता [150]वरुण, [150]वै, ता [151]वायु, वै, ता [151]कुबेर, [152]वै, ता [152]ईशान, वै, ता [153]ब्रह्मा, वै, विष्णु, [154]वै, ता [नवदुर्गा] [154]नवार्ण । [155]शैलपुत्री, [156]ब्रह्मचारिणी, [157]चण्डघण्टा, [157]कूष्माण्डी, [158]स्कन्दमाता, [158]कात्यायनी, [159]कालरात्री, [159]महागौरी, [159]देवदूती, (नवग्रह) [160]सूर्य, वै । [161]चन्द्र, वै । [161]भौम, वै । [162]बुध, वै । [163]जी[illegible] । [163]शुक्र, वै । [164]शनि, वै । [165]राहु, वै । [illegible] वास्तुष्पति, वै । [168]अभयङ्करी, ता वै ।

# क्रयपुस्तकसूची

| | | |
|---|---|---|
| १ | नित्यकर्मविधिः नं० १ | ≡) |
| २ | ,, नं० २ | ।=) |
| ३ | ,, नं० ३ | ।=)॥ |
| ४ | ,, नं० ४ भवानी | ॥)॥ |
| ५ | शिवपूजा नं. १ नं. ।=) | ।≡) |
| ६ | गणेशदुर्गा | ।–) |
| ७ | पचस्तवी | ।)॥ |
| ८ | देवीपूजा | ।–) |
| ९ | चमानुवाक्य | =) |
| १० | रुद्रपञ्चक | ।) |
| ११ | कर्मकाण्डपुस्त. नं | ॥=) |
| १२ | ,, नं० २ | १।) |
| १३ | मन्त्रात्मक,, नं० ३ | ॥-) |
| १४ | ,, नं० ४ स[illegible] | २।) |
| १५ | वेदकल्प[illegible]म् ॥ | |
| १६ | मेखला[illegible] | |
| १७ | वड्डु[illegible] | |
| १८ | पार्थिवेश्वरपूजा | ।=) |
| १९ | उपदेशपंचक | ≡) |
| २० | योगवासिष्ठसार | ≡) |
| २१ | भक्तिविवेकसार | ॥=) |
| २२ | भवानीसहस्रना० | ।–) |
| २३ | विष्णुसहस्र० | ।–) |
| २४ | रा.ज्वा.शा.ग.स | ॥–) |
| २५ | आदित्यहृदय | ।–) |
| २६ | कलशस्थापनाद्धार | –) |
| २७ | शिवसूर्यनामावली | ।–) |
| २८ | सहस्रनामावली | १।) |
| २९ | अन्नपूर्णापूजा | –) |
| ३० | बृहत्स्तोत्ररत्नाकर | ३।) |
| ३१ | काश्मीरिकज्योतिष | ॥।) |
| ३२ | वेदकल्पद्रुम नं २ व्रतोद्या- | |

कर्मकाण्डे जपवि[illegible] प नयुक्त स्थूलाक्षरों में ।

कि. एम. प्रस